University of Madras.

# F. A. SANSKRIT TEXT 1908.

# PRIYADARSIKA

## *With Sanskrit Commentary*

BY

T. V. SREENIVASACHARIAR,

*Senior Sanskrit Pandit, St. Joseph's College, Trichinopoly.*

Madras:

PRINTED AT THE ORIENTAL PRESS.

1908.

श्रीगुरुभ्यो नमः ।

# महाकविश्रीहर्षविरचिता
# प्रियदर्शिका नाटिका
## सव्याख्या



धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी, पुनः
पश्यन्ती वरमुत्सुका, नतमुखी भूयोह्रिया ब्रह्मणः ।
सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने हरे,
स्पर्शादुत्पुलका, करग्रहविधौ, गौरी शिवायास्तु वः ॥१॥

---

अस्त्रीकृतकुशमनघं स्त्रीकृतपाषाणमद्भुतैकनिधिम् ।
रामं विराममसतां वन्दे वैदेहकन्यया सहितम् ॥

अस्तु खलाय मदीयो नमसां वाकः परर्द्धिदुःखभुजे ।
मलिनस्य यस्य चित्तं कादम्बर्येव दुःस्थितिं प्राप्तम् ॥

अथ तत्रभवान् श्रीहर्षनामा कविः प्रारिप्सितग्रन्थाविघ्नपरिसमाप्तये प्रचय-गमनाय चावश्यकर्तव्यतया विहितां ग्रन्थादौ सूत्रधारप्रयोज्यां द्वाविंशतिपदात्मिकां आशीरूपां नान्दीं उपनिबध्नाति—**धूमेति**॥ गौरी पार्वती, वः, शिवाय मङ्गलाय, अस्तु इति योजना । सा कीदृशीत्यत आह—धूमेत्यादिना । करग्रहविधौ पाणि-ग्रहणमङ्गलाचरणसमये, धूमेन हूयमानवैवाहिकाग्निधूमेन व्याकुले दौःस्थ्यं प्राप्ते दृष्टी यस्यास्सा तादृशी, इन्दोः शिवशिरस्स्थितचन्द्रस्य किरणैः ज्योत्स्नाभिः आह्लादिते

विकासिते अक्षिणी यस्यास्सा, उत्सुका औत्सुक्ययुक्ता सती, वरं जामातरं हरं पश्यन्ती विलोकयन्ती, पुनः ब्रह्मणः पार्श्वस्थितात् पुरोहितात् चतुर्मुखात्, भूयोह्रिया अमितया अपत्रपया, नतमुखी अवनतवदना, गङ्गां दधाने शिरसा वहति, हरे शिवे, पादनखेन्दवः चन्द्रतुल्याः पादनखाः त एव दर्पणानि फालफल्यात् बिम्बग्रहणसामर्थ्याच्च। तानि गते प्राप्ते सति तत्र प्रतिफलति सतीत्यर्थः। सेर्ष्या सपत्न्यासङ्गनिबन्धनासूया· सहिता, पुनरपि, स्पर्शात् ईश्वरकरस्पर्शात्, उत्पुलका अमितरोमाञ्चा च। इयं द्वाविंशतिपदा नान्दी। नान्दीलक्षणन्तु—'अर्थतश्शब्दतो वापि मनाक्काव्यार्थसूचनम्। यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा॥ द्वाविंशत्या पदैर्वापि सा नान्दी परिकीर्तिता' इति। शार्दूलविक्रीडितं वृत्तम्। तल्लक्षणन्तु—'सूर्याश्वैर्मसजास्सततास्सगुरवः शार्दूलविक्रीडितम्' इति। आदौ भूदेवताकस्य श्रीप्रदस्य मगणस्य विन्यासात् गणशुद्धिः। अत्र रसः शृङ्गारः, नायको धीरललितः, प्रख्यातमितिवृत्तम्। नाटिका· लक्षणन्तु—'नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका। प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः॥ स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा। नवानुरागा कन्याऽत्र नायिका नृपवंशजा। संप्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः। देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा। पदे पदे मानवती तद्वशः सङ्गमो द्वयोः॥ वृत्तिः स्यात् कैशिकी स्वल्पविमर्शास्सन्धयः पुनः।' इति। अत्र मनाक् प्रबन्धार्थोऽपि सूच्यते। धूमव्याकुलदृष्टिरित्यनेन कलिङ्गहतककल्पितायां स्वपितुर्दृढवर्मणो विपत्सु प्रियदर्शिकाया विषादः, इन्दुकिरणैराह्लादिताक्षीत्यनेन निजजनकसुहृदो विन्ध्यकेतोः तत्परिवाराणां च सङ्गत्या तस्या एव जातो हर्षः, पश्यन्ती वरमुत्सुका इत्यनेन तस्याः यादृच्छिकराजसन्दर्शनं, तन्निबन्धनं तत्समागमौत्सुक्यं, ततश्च देवीपरिजनापरिज्ञानाय लज्जया तद्गोपनम्, गर्भनाटकप्रस्तावे मनोरमया जिघृक्षितां वत्सराजभूमिकां वासवदत्तासम्मतां परिहृत्य देवीविप्रलम्भार्थं स्वयमेव नृत्यता राज्ञा सह सङ्गतां प्रियदर्शिकां ज्ञात्वा देव्याः असूया, ततः परितुष्टया देव्या राज्ञो हस्ते प्रियदर्शिकासमर्पणात् सन्तोषो राज्ञः' इति च मनाक् काव्यार्थसूचनम्॥

अपि च

कैलासाद्रावुदस्ते परिचलति, गणेषूल्लसत्कौतुकेषु,
क्रोडं मातुः कुमारे विशति, विषशुचि प्रेक्षमाणे सरोषम् ।
पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं,
क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयघनमुमया पातु तुष्टः शिवो वः ॥

( नान्द्यन्ते )

---

कैलासेति ॥ कैलासाद्रौ राजताचले, उदस्ते रावणेन उत्क्षिप्ते, परिचलति सति, गणेषु प्रमथगणेषु, उल्लसत् भासमानं कौतुकं आकस्मिकपर्वतचाञ्चल्य-निमित्तपरिज्ञानविषयकौत्सुक्यं येषां तेषु तादृशेषु सत्सु, कुमारे षण्मुखे, मातुः जनन्याः, क्रोडं उत्सङ्गम्, विशति भीत्या प्रविशति सति, विषशुचि शिवस्य भूषणभूते सर्पे (जातावेकवचनम्) सरोषं कोपेन सह, प्रेक्षमाणे पश्यति सति, दशमुखे रावणे, पादावष्टम्भेन ईश्वरचरणनिष्पीडनेन सीदत् भज्यमानं वपुः यस्य तादृशे, पातालमूलं अतलभुवनस्याधोदेशं, याति गच्छति सति, क्रुद्धो-ऽपि रुष्टोऽपि, उमया पार्वत्या, भयेन घनं दृढं यथा तथा आश्लिष्टमूर्तिः आलिङ्गितशरीरः, अत एव, तुष्टः सन्तुष्टः, शिवः रुद्रः, वः युष्मान्, पातु रक्षतु । स्रग्धरा वृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् । 'श्लोकपादः पदं केचित्' इति वचनानुसारेण श्लोकपादस्य पदत्वाभ्यु-पगमे द्वाभ्यां पद्याभ्यां घटिता अष्टपदा नान्दी वा ॥ २ ॥

**नान्द्यन्त इति** ॥ नान्द्याः अन्ते अवसाने (सूत्रधारे गते अपरः सूत्र-धारसदृशः नटः रङ्गं प्रविश्य वक्ष्यमाणां कथां प्रस्तोष्यतीति शेषः ।) तदुक्तम्— 'पूर्वरङ्गं प्रयुज्यादौ सूत्रधारे विनिर्गते । अपरस्तद्वदागत्य काव्यमास्थापयेन्नटः ॥' इति । सूत्रधारलक्षणन्तु—'नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्रं धारय-तीत्यर्थे सूत्रधार इतीर्यते ॥' इति ॥

**सूत्रधारः**—(परिक्रम्य) अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः, यथा—"अस्मत्स्वामिना श्रीहर्षदेवेन, अपूर्ववस्तुरचनालङ्कृता **प्रियदर्शिका** नाम नाटिका कृतेति, अस्माभिः श्रोत्रपरम्परया श्रुता; न प्रयोगतो दृष्टा। तत्तस्यैव राज्ञः सर्वजनहृदयाह्लादिनो बहुमानात्, अस्मास्वनुग्रहबुद्ध्या वा, यथावत् प्रयोगेण त्वया नाटयितव्या" इति। तद्यावन्नैपथ्यरचनां कृत्वा यथाभिलषितं सम्पादयामि। (परितोऽवलोक्य) आवर्जितानि सामाजिकानां मनांसि इति मे निश्चयः। कुतः

---

**अद्येत्यादि** ॥ सबहुमानं सगौरवं यथा तथा, आहूय आकार्य, पादपद्मोपजीविना चरणसेवकेन, अस्मत्स्वामिना अस्मत्प्रभुणा, अपूर्वा नूतना या वस्तुरचना कथासन्दर्भघटना तया अलङ्कृता, प्रियदर्शिका नाम प्रियदर्शिकेति प्रसिद्धा। 'नाम प्राकाश्ये' प्रयोगतः अभिनयतः, हृदयाह्लादिनः मानसोल्लासकस्य, बहुमानात् गौरवात्, अस्मासु अनुग्रहबुद्ध्या वा, दयार्द्रहृदयतया वा, यथावत् यथावस्थितकथामनुसृत्य, प्रयोगेण अभिनयेन, नाटयितव्या भावुकरसास्वादाभिमुखीकरणीया। नैपथ्यरचनां भूमिकापरिकल्पनं नाट्योचितवेषपरिकल्पनमिति यावत्। यथाभिलषितं मदभिलाषानुरोधेन। यद्वा यथा अभिलषितं समीहितम्, तथा सम्पादयामि अनुतिष्ठामि निर्वर्तयामीति वा। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानसमीपे भविष्यति वर्तमानवत्प्रयोगः। सम्पादयिष्याम्यचिरेणेत्यर्थः। सामाजिकानां सभास्ताराणाम्, आवर्जितानि वशीकृतानि ॥

अद्याहमित्यारभ्य भारतीवृत्तिः। तल्लक्षणन्तु—'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः' इति। अस्याश्चत्वार्यङ्गानि। प्ररोचना, वीथी, प्रहसनं, प्रस्तावना चेति। एतेषु प्रधानभूतयोः प्ररोचनाप्रस्तावनयोरङ्गयोर्मध्ये प्ररोचनामुपक्षि-

श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,
लोके हारि च वत्सराजचरितं, नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं, किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ३ ॥

(नेपथ्याभिमुखमवलोक्य) अये, कथं प्रस्तावनाभ्युद्यते मयि, विदितास्मदभिप्रायोऽङ्गाधिपतेर्दृढवर्मण आन्तःपुरिककञ्चुकिभूमिकामादाय अस्मत्भ्रात इत एवाभिवर्तते! तद्यावदहमपि अनन्तरभूमिकां सम्पादयामि ।

(इति निष्क्रान्तः)

इति प्रस्तावना

---

पति । **श्रीहर्ष इत्यादिना** ॥ 'कविकाव्यनटादीनां प्रशंसातः प्ररोचना' इति तल्लक्षणम् । श्रीहर्षः एतन्नामा महीपतिः, निपुणः अतिसमर्थः, कविः रमणीयशब्दार्थसङ्घटनचतुरः । एषा परिषदपि गोष्ठ्यपि, गुणग्राहिणी गुणग्रहणैकशीला । लोके, वत्सराजचरितं उदयनकथा, हारि मनोहरं च । वयञ्च, नाट्ये चतुर्विधाभिनयैर्धीरोदात्ताद्यवस्थानुकरणे, दक्षाः समर्थाः । इह अस्मिन् समये, एकैकमपि वस्तु वाञ्छितस्य ईप्सितस्य फलस्य प्राप्तेः, पदं प्रतिष्ठापकम् । मद्भाग्यानां ममादृष्टविशेषाणां, उपचयात् वृद्ध्या, अयं ईदृशः, सर्वः समग्रः, गुणानां गणः समुदायः, समुदितः प्रादुर्भूतः सङ्गतो वा । शार्दूलविक्रीडितं वृत्तम् । काव्यार्थापत्तिरलङ्कारः । 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति लक्षणात् ॥ ३ ॥

**नेपथ्येति** ॥ नेपथ्यं वेषपरिग्रहयोग्या यवनिकान्तर्भूमिः । 'कुशीलवकुटुम्बस्य स्थली नेपथ्यमिष्यते' इत्युक्तेः । अये इति विस्मयार्थोऽयं निपातः । अभ्युद्यते उद्युञ्जाने सत्येव, अङ्गानां अङ्गदेशस्य, अयं च देशः सरय्वाः सङ्गमेऽवस्थितः । अत्र महादेवस्य हुङ्कारेण कामस्य अङ्गत्यागात् अयं अङ्गनाम्ना ख्यातः । अधिपतेः भूमिकां वेषं, अनन्तरभूमिकां समनन्तरक्षणप्रवेक्ष्यमाणपात्रोचितं वेषं, यावत् सम्पादयामि सम्पादयिष्यामि । 'यावत्पुरानिपातयोर्लट्' इत्यनेन यावच्छब्दप्रयोगे भविष्यति लट् ॥

# प्रथमोऽङ्कः ।

( ततः प्रविशति कञ्चुकी । )

**कञ्चुकी**—( सशोकं श्रमं नाटयन्, निश्वस्य ) कष्टं भोः कष्टम् !

**राज्ञो विपद्बन्धुवियोगदुःखं,**
**देशच्युतिर्दुर्गमभमार्गखेदः ।**
**आस्वाद्यतेऽस्याः कटुनिष्फलायाः**
**फलं मयैतच्चिरजीवितायाः ॥ ४ ॥**

( सशोकविस्मयम् ) तादृशस्यापि नाम, अप्रतिहतशक्तित्रयस्य रघु-दिलीपनहुषतुल्यस्य दृढवर्मणो, मत्प्रार्थनेऽप्यनेन स्वदुहिता वत्सराजाय दत्तेति बद्धानुशयेन, वत्सराजोऽपि दृढबन्धने वर्तत इति लब्धरन्ध्रेण

---

प्रस्तावनालक्षणन्तु—'नटी विदूषको वाऽपि पारिपार्श्वक एव वा । सूत्रधारेण सहितास्सल्लापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ' इति ॥

**राज्ञ इति** ॥ राज्ञः, विपत् आपत् । बन्धूनां बान्धवानां वियोगेन दुःखं क्लेशः । देशात् निवासदेशात्, च्युतिः भ्रंशः, दुर्गमे दुःखेनापि गन्तुमशक्ये मार्गे (गमनेन) खेदः आयासः । कटुः क्रूरा रूक्षा वा, निष्फला फलरहिता च तस्याः, अस्याः, चिरजीवितायाः चिरजीवनस्य, एतत् ईदृशं, फलम्, मया, आस्वाद्यते उपभुज्यते । वृत्तमुपजातिः ॥ ४ ॥

**तादृशस्येत्यादि** ॥ शक्तयः प्रभूत्साहमन्त्राख्याश्शक्तयः तासां त्रयं शक्तित्रयं अप्रतिहतं अकुण्ठितं शक्तित्रयं यस्य सः, तस्य दृढवर्मणः तन्नाम्नोऽस्मन्महाराजस्य अस्य विपत्तिरित्यनेनान्वयः । अनेन दृढवर्मणा, स्वदुहिता स्वपुत्री ( प्रियदर्शिकेति यावत् ) दत्ता वाग्दानेन वत्सराजाय पत्नीत्वेन चिकीर्षिता, बद्धः अनुशयः स्त्रीरत्नालाभनिबन्धनः पश्चात्तापः येन, दृढबन्धने घननिगडबन्धे

कलिङ्गहतकेन सहसाऽऽगत्य विपत्तिरीदृशी क्रियत इति यत् सत्यमुपपन्नमपि न श्रद्दधे । कथमेकान्तनिष्ठुरमीदृशं च दैवमस्मासु ! येन सापि राजपुत्री, यथाकथञ्चिदेनां वत्सराजायोपनीय, स्वामिनमनृणं करिष्यामीति मत्वा, मया तादृशादपि प्रलयकालदारुणादवस्कन्दसम्भ्रमादपवाह्य, देवस्य दृढवर्मणो मित्रभावान्विततया, आटविकस्य नृपतेर्विन्ध्यकेतोर्गृहे स्थापिता सती, स्नानाय नातिदूरमित्यगस्त्यतीर्थं गते मयि, क्षणात् कैरपि निपत्य हते विन्ध्यकेतौ, रक्षोभिरिव निर्मानुषीकृते दग्धे स्थाने, सापि न ज्ञायते कस्यामवस्थायां वर्तत इति । निपुणञ्च विचितमेतन्मया सर्वं स्थानम्, न च ज्ञातं किं तैरेव दस्युभिर्नीता, अथवा किमिहैव दग्धेति । तत् किं करोमि मन्दभाग्यः ? (विचिन्त्य) अये ! श्रुतं मया बन्धनात् परिभ्रष्टः प्रद्योततनयामपहृत्य वत्सराजः कौशाम्बीमागत इति । किं तत्रैव गच्छामि ? ( निःश्वस्यात्मनोऽवस्थां पश्यन्) अहह ! राजपुत्र्या विना तत्र गत्वा किं कथयिष्यामि ? 'अये ! कथितं चाद्य मम विन्ध्यकेतुना—"मा भैषीः ! जीवति तत्रभवान् महाराजो दृढवर्मा, परन्तु गाढप्रहारजर्झरीकृतवपुर्बद्धस्तिष्ठति" इति । तदधुना

---

चण्डमहासेनस्य कारायाम् । लब्धं प्राप्तं रन्ध्रं च्छिद्रं येन तेन, कलिङ्गानां राजा कलिङ्गः हतकः दुष्टः स चासौ कलिङ्गश्च कलिङ्गहतकः । उपपन्नं संप्राप्तमपि, न श्रद्दधे न विश्वसिमि । दैवं नियतिः, एकान्तं निष्ठुरं क्रूरम्, अनृणं ऋणरहितम्, अवस्कन्दः समरविधानाय शत्रुभियोगः । अपवाह्य बहिर्निष्कास्य, अटव्यां अरण्ये भवः आटविकः विचितं अन्वेषितम् । दस्युभिः चोरैः, दग्धा भस्मसात्कृता वा । मन्दभाग्यः अल्पपुण्यः, अये इति आकस्मिकस्मरणजनिताश्चर्यद्योतकमव्ययम् । परिभ्रष्टः च्युतः । कौशाम्बीं तदाख्यां निजनगरीम्, मा भैषीः भयं मास्त्वित्यर्थः । भियो लुङि रूपम् । 'न माङ्योगे' इत्यनेन माङ्योगे अडागमनिषेधः । जर्झरीकृतः

स्वामिनमेव गत्वा पादपरिचर्यया जीवितशेषमात्मनः सफलयिष्यामि । ( परिक्रम्योर्ध्वमवलोक्य ) अहो ! अतिदारुणता शरदातपस्य, यदेवमनेक-दुःखसन्तापितेनापि मयैतत्तैक्ष्ण्यमवगम्यते !

घनबन्धनमुक्तोऽयं कन्याग्रहणात् परं तुलां प्राप्य ।
रविरधिगतस्वधामा प्रतपति खलु वत्सराज इव ॥ ५ ॥

( निष्क्रान्तः )

इति शुद्धविष्कम्भः ।

---

संक्षोभमापादितः। पादपरिचर्यया चरणशुश्रूषया, सफलयिष्यामि सार्थकीकरिष्यामि । अतिदारुणता अतिक्रौर्यम् । अवगम्यते ज्ञायते ॥

**घनेति** ॥ अयं रविः, घनबन्धनात् मेघोपरोधात्, मुक्तः त्यक्तः, कन्या-ग्रहणात्परं कन्याराशिप्रवेशोत्तरं, तुलां तुलाराशिम्, प्राप्य आसाद्य, अधिगतं प्राप्तं स्वं स्वकीयं धाम तेजो यस्य सः । वत्सराज इव उदयन इव, प्रतपति खलु दीप्यते किल । (पक्षे) घनात् दृढात्, बन्धनात् प्रद्योतकृतनिगडबन्धात्, मुक्तः त्यक्तः, कन्यायाः वासवदत्ताख्यकन्यायाः ग्रहणात् स्वीकरणात् परं, तुलां उत्कर्षं प्राप्य लब्ध्वा अधिगतं प्राप्तं स्वधाम स्वकीयस्थानं कौशाम्बीमिति यावत्, यस्य सः । प्रतपति प्रतापवान् भवति । श्लिष्टोपमा । पथ्यायां वृत्तम् । तल्लक्षणन्तु 'त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः । पथ्येति नाम तस्याः छन्दोविद्भि-स्समाख्यातम्' इति ॥ ५ ॥

विष्कम्भलक्षणन्तु—'वृत्तवर्तिष्यमाणानां कथांशानां प्रदर्शकः । मध्यमे-नैकपात्रेण द्वाभ्यां त्रिभिरथापि वा । प्रयोज्यो वस्तुविस्तारो विष्कम्भस्तु द्विधा भवेत् । शुद्धसङ्कीर्णभेदेन शुद्धः केवलमध्यमैः । पात्रैः प्रयोज्यो भाषैक्यात् सङ्कीर्णो नीचमध्यमैः । पात्रैस्स्याद्भिन्नभाषोऽर्थस्संस्कृतप्राकृतादिभिः । आदौ विष्कम्भकं कुर्यान्नाटकेषु महाकविः । अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् । यदा सन्द-र्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ॥' इति ॥

(ततः प्रविशति राजा विदूषकश्च)

**राजा—**

**भृत्यानामविकारिता परिगता, दृष्टा मतिर्मन्त्रिणां,**
**मित्राण्यप्युपलक्षितानि, विदितः पौरानुरागोऽधिकम् ।**
**निर्व्यूढा रणसाहसव्यसनिता, स्त्रीरत्नमासादितं,**
**निर्व्याजादिव धर्मतः किमिव न प्राप्तं मया बन्धनात् ॥**

**विदू—**(सराषं) [1]भो वअस्स कहं तं एव्व दासीए सुदं बन्धणहदअं पसंससि । तं दाणिं विसुमरिदं । जं णवग्गहो विअ जूहवई

---

१. भो वयस्य, कथं तमेव दास्याः सुतं बन्धनहतकं प्रशंससि । तदिदानीं विस्मृतं । यत् नवग्रह इव यूथपतिः खलखलायमानलोहश्रृङ्खलाबन्धपरिस्खलच्चरणः,

---

**भृत्यानामिति** ॥ भृत्यानां किङ्कराणाम्, विकारः अन्यथाभावः सः एषां अस्तीति विकारिणः तेषां भावः विकारिता न विकारिता अविकारिता अनन्यथाभावः (पूर्ववदेव स्वामिपक्षपात इति यावत्) परिगता ज्ञाता । मन्त्रिणां अमात्यानाम्, मतिः चित्तं च, दृष्टा अध्यक्षिता, मित्राणि सुहृदोऽपि, उपलक्षितानि दृष्टानि । पौराणां नागराणां अनुरागः प्रेमा, अधिकं यथा तथा, विदितः ज्ञातः । रणे युद्धे यत् साहसं अविमृश्यकार्यकरणरूपम्, तत्र व्यसनिता तत्परत्वम्, निर्व्यूढा सम्यगनुष्ठिता । स्त्रीरत्नं उत्तमा स्त्री, आसादितं प्राप्तम् । निर्व्याजात् अकपटात्, फलाभिसन्धिराहित्येनानुष्ठीयमानाद्वा, धर्मत इव, बन्धनात् कारागृहात्, मया, किमिव न प्राप्तं, सर्वमपि मया प्राप्तमेवेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लेशालङ्कारः । तल्लक्षणन्तु—'लेशस्स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्' इति ॥ ६ ॥

**भो वयस्येत्यादि** ॥ दास्याः सुतं दुष्टं 'षष्ठ्या आक्रोशे' इत्यनेन षष्ठ्याः अलुक् । बन्धनहतकं दुष्टं कारागृहमित्यर्थः । प्रशंससि स्तवीषि । तत् बन्धनं, विस्मृतं स्मृतिपथात् दूरीकृतं किमिति काकुः । नचेदं कदाचिदपि विस्मर्तुं अर्ह-

खलखलायमाणलोहसिंखलाबन्धपरिक्खलन्तचलणो सुण्णमुहपोक्खरपिसुणिदहिअअसंदावो रोसवसुत्तंभिअदिट्ठी अहिगअधरणिपिट्ठो रअणीसु वि णिद्दासुहं ण पावेसि ।

**राजा**—वसन्तक दुर्जनः खल्वसि। पश्य

**दृष्टं छादकमन्धकारगहनं, नो तन्मुखेन्दुद्युतिः,**
**पीडा ते निगळस्वनेन, मधुरास्तस्या गिरो न श्रुताः ।**

---

शून्यमुखपुष्करपिशुनितहृदयसन्तापः, रोषवशोत्तम्भितदृष्टिः अधिगतधरणिपृष्ठः रजनीष्वपि निद्रासुखं न प्राप्नोषि ।

---

मित्यर्थः । खलखलायमानः शब्दायमानः यः लोहश्रृङ्खलाबन्धः निगळबन्धनं तेन परिस्खलन्तौ स्खालित्यमासादयन्तौ चरणौ यस्य सः । शून्यं यत् मुखपुष्करं वदनारविन्दं तेन सूचितः दर्शितः हृदयसन्तापः मनोदुःखं येन तादृशः । रोषवशेन क्रोधाधीनतया उत्तम्भिते उद्वर्तिते दृष्टी येन सः । अधिगतं धरणीपृष्ठं येन सः। विहायोचितमासनशयनादिकं क्षतीव स्थण्डिलशायीत्यर्थः। रजनीष्वपि किमुताह्नीति भावः। वसन्त इति विदूषकस्य नाम। तल्लक्षणन्तु—'कुसुमवसन्ताद्यभिधः कर्मवपुर्वचनवेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकस्स्यात् स्वकर्मज्ञः ' इति ॥

दुर्जनः दुष्टः, असि । गुणपराङ्मुखत्वं दोषैकदर्शित्वरूपं विदूषकगतं दौर्जन्यं । तमेव विशदयति—पश्येत्यादिना । **दृष्टमिति** ॥ अन्धकारेण तमसा गहनं दुष्प्रवेशं, छादकं कारागृहम् । चारकमिति पाठस्साधीयान् । दृष्टं आलोकितम् । तस्याः वासवदत्तायाः मुखेन्दुद्युतिः वदनचन्द्रमरीचिः, नो दृष्टा । निगडस्य श्रृङ्खलाबन्धस्य स्वनेन शब्देन, ते तव, पीडा दुःखं । मधुराः माधुर्ययुक्ताः तस्याः

**क्रूरा बन्धनरक्षिणोऽद्य मनसि स्निग्धाः कटाक्षा न ते**
**दोषान् पश्यसि बन्धनस्य न पुनः प्रद्योतपुत्र्या गुणान् ॥**

**विदू**—(सगर्वं) जेदि णिअलबन्धणं सुहबन्धणं होदि, ता कीस तुमं दिढवम्मा बद्धोत्ति कलिङ्गरण्णो उवरि रोसं उव्वहसि ।

**राजा**—(विहस्य) धिङ्मूर्ख न खलु सर्वो वत्सराजः । य एवं वासवदत्तामवाप्य बन्धनान्निर्यास्यति। तदास्तां तावदियं कथा । विन्ध्यकेतोरुपरि बहूनि दिवसानि विजयसेनस्य प्रेषितस्य । न चाद्यापि तत्सकाशात् कश्चिदागतः । तदाहूयताममात्यो रुमण्वान्। तेन सह किञ्चिदालपितुमिच्छामि ।

---

१. यदि निगळबन्धनं सुखबन्धनं भवति । तर्हि कस्मात् त्वं दृढवर्मा बद्ध इति कलिङ्गराजस्योपरि रोषं उद्वहसि ।

---

राजपुत्र्याः, गिरः वाचः, न श्रुताः नाकर्णिताः । अद्य क्रूराः घातुकाः, बन्धनरक्षिणः कारागृहरक्षकाः परं, तव, मनसि ( वर्तन्त इति शेषः ) ते तादृशाः स्निग्धाः अतिमनोहराः, कटाक्षाः राजदुहितुः नयनान्तवीक्षणानि, ते मनसः, न गोचरा अभवन् । बन्धनस्य कारायाः सम्बन्धिनः, दोषान्, पश्यसि आकलयसि। प्रद्योतपुत्र्याः प्रद्योतकुमार्याः वासवदत्तायाः, गुणान् पुनः, न पश्यसि न गणयसि । अत्र दृशेर्ज्ञानसामान्यार्थकत्वं । शार्दूलविक्रीडितं वृत्तम् । अनुज्ञालङ्कारः । 'दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् ।' इति लक्षणम् ॥ ७ ॥

**यदीत्यादि** ॥ रोषं क्रोधम्, उद्वहसि अनुस्यूतं वहसि । प्रेषितस्य प्रहितस्य । तत्सकाशात् तत्समीपात् । आहूयतां आकार्यताम् । आलपितुं सम्भाषितुं,

(प्रविश्य प्रतीहारी)

**प्रतीहारी**—[१]जेदु जेदु देवो, एसो क्खु विजअसेणो अमच्चो रुमण्णो वि पडिहारभूमिं उवट्ठिदा।

**राजा**—त्वरितं प्रवेशय।

**प्रतीहारी**—[२]जं देवो आणवेदि। (इति निष्क्रान्ता।)

(ततः प्रविशति रुमण्वान् विजयसेनश्च।)

**रुमण्वान्**—(विचिन्त्य)

**तत्क्षणमपि निष्क्रान्ताः कृतदोषा इव विनापि दोषेण।**
**प्रविशन्ति शङ्कमाना राजकुलं प्रायशो भृत्याः॥ ८॥**

(उपसृत्य) जयतु देवः।

**राजा**—(आसनं निर्दिश्य) रुमण्वन्, इत आस्यताम्।

**रुम.**—(सस्मितं उपविश्य) एष खलु विन्ध्यकेतोर्विजेता विजयसेनः प्रणमति।

---

१. जयतु जयतु देवः। एष खलु विजयसेनः अमात्यो रुमण्वानपि प्रतीहारभूमिमुपस्थितौ।

२. यद्देव आज्ञापयति।

---

इच्छामि वाञ्छामि। प्रतीहारी द्वारपालिका, प्रतीहारभूमिं द्वारदेशं, उपस्थितौ प्राप्तौ॥

**तत्क्षणमपीति**॥ भृत्याः राजसेवकाः, तत्क्षणं तदात्व एव, निष्क्रान्ता अपि प्रभुसमीपात् बहिर्निर्गता अपि, दोषेण विनापि निर्दोषा अपि, कृतदोषा इव रचितापराधा इव, शङ्कमानाः सन्दिहानास्सन्तः, राजकुलं राजगृहम्, प्रायशः प्रविशन्ति। स्वभावोक्तिः। पथ्यार्या वृत्तम्॥ ८॥

**विजयसेनः**—(तथा करोति)

**राजा**—(सादरं परिष्वज्य) अपि कुशली भवान्?

**विज.**—अद्य स्वामिनः प्रसादात्।

**राजा**—विजयसेन, उपविश्यताम्।

**विज.**—(उपविशति)

**राजा**—विजयसेन, कीदृशो विन्ध्यकेतोर्वृत्तान्तः?

**विज.**—देव, किमपरं कथयामि, यादृशः स्वामिनि कुपिते?

**राजा**—तथापि विस्तरतः श्रोतुमिच्छामि।

**विज.**—देव, श्रूयताम्—इतो वयं देवपादादेशात् यथादिष्टेन करितुरगपदातिसैन्येन महान्तमप्यध्वानं दिवसत्रयेणोल्लङ्घ्य प्रभातवेलायामतर्किता एव विन्ध्यकेतोरुपरि निपतिताः स्मः!

**राजा**—ततस्ततः?

**विज.**—ततस्सोऽप्यस्मद्बलकलकलाकर्णनेन प्रतिबुद्धः केसरीव विन्ध्यकन्धरान्निर्गत्य विन्ध्यकेतुरनवेक्षितबलवाहनो यथासन्निहितकतिपयसहायः सहसा खमुद्धोषयन् अस्मानभियोक्तुं प्रवृत्तः।

---

**उपसृत्येत्यादि** ॥ रुमण्वान् तन्नामा राज्ञो मुख्यामात्यः। परिष्वज्य आलिङ्ग्य देवपादानां भवत इति यावत्। आदेशात् आज्ञया, करी गजः, पादाभ्यां चरणाभ्यां अतति सततं शत्रोरभिमुखं युद्धाय गच्छतीति पदातिः। अतर्किता एव अनूहिता एव, प्रतिबुद्धः प्रबोधं प्राप्तः केसरीव सिंह इव। अनवेक्षितं साह्यायाप्रतिपालितं बलं सेना वाहनं अश्वश्च यद्वा अनवेक्षितानि बलवाहनानि बलसम्बन्धीनि करितुरगरथादीनि येन सः तादृशः। कतिपये स्वल्पाः सहायाः यस्य सः तादृशस्सन्। खं आकाशम्। उद्धोषयन् सिंहनादेन सशब्दं कारयन्। अभियोक्तुं योद्धुं।

**राजा**—(रुमण्वन्तमवलोक्य, सस्मितम्) शोभितं विन्ध्यकेतुना। ततस्ततः?

**विज.**—ततोऽस्माभिरयमसाविति द्विगुणबद्धमत्सरोत्साहैर्महता विमर्देन निःशेषितसहायः एक एव विमर्दिताधिकबलक्रोधवेगो दारुणतरं संप्रहारमकरोत्।

**राजा**—साधु विन्ध्यकेतो! साधु साधु!!

**विज.**—किं वा वर्ण्यते देव! संक्षेपतो विज्ञापयामि—

**पादातं पत्तिरेव प्रथमतरमुरःक्षेपमात्रेण पिष्ट्वा**
**दूरं नीत्वा शरौघैर्हरिणकुलमिव त्रस्तमश्वीयमाशाः।**

---

प्रवृत्तः उद्युक्तः। शोभितं भावे क्तः। द्वौ गुणौ यस्मिन् कर्मणि तद्यथा तथा, बद्धः समारोपितः मत्सरः मात्सर्यं उत्साहश्च यैस्तैस्तादृशैः, अस्माभिः, अस्य निश्शेषितेत्यत्रान्वयः। विमर्देन अभियोगेन, निश्शेषिताः निरवशेषं नाशिताः सहायाः यस्य तादृशः, एक एव असहाय एव विमर्दितं ध्वंसितं यत् अधिकबलं महत्सैन्यं तेन जातः क्रोधवेगः कोपसंरम्भः यस्य सः तथा। दारुणतरं अत्यन्तभयङ्करं सम्प्रहारं युद्धं, अकरोत् अतनोत्॥

**पादातमिति**॥ सः विन्ध्यकेतुः, पत्तिरेव स्वयं पदातिरेव सन्, प्रथमतरं अग्रतः, पादातं आस्माकीनपदातिवृन्दं, उरःक्षेपमात्रेण उरसा स्ववक्षसा यः क्षेपः तन्मात्रेण पिष्ट्वा स्ववक्षःस्थलाभिघातेनैव चूर्णीकृत्य, शरौघैः बाणपरम्पराभिः, (करणैः) त्रस्तं भीतं, हरिणकुलमिव सारङ्गसमूहमिव, अश्वीयं वाजिबृन्दं, दूरं

सर्वत्रोत्सृष्टसर्वप्रहरणनिवहस्तूर्णमुत्खाय खड्गं
पश्चात्कर्तुं प्रवृत्तः करिकरकदलीकाननच्छेदलीलाम् ॥

एवं बलत्रितयमाकुलमेक एव
कुर्वन् कृपाणरुधिरच्छुरितांसकूटः ।
शस्त्रप्रहारशतजर्झरितोरुवक्षाः
श्रान्तश्चिराद्विनिहतो युधि विन्ध्यकेतुः ॥ १० ॥

**राजा**—रुमण्वन्, सत्पुरुषकुलोचितमार्गमनुगच्छतो यत् सत्यं व्रीडिता एव वयं विन्ध्यकेतोर्मरणेन ।

---

आशाः दिशः, नीत्वा प्रापय्य । सर्वत्र सर्वासु दिक्षु उत्सृष्टः प्रयुक्तः सर्वेषां समस्तानां प्रहरणानां आयुधानां निवहः समूहः येन सः तादृशः, तूर्णं झटिति, खड्गं असिं, उत्खाय कोशादाकृष्य, पश्चात् ततः, करिणां गजानां करा एव शुण्डादण्डा एव कदल्यः रम्भास्तम्भाः तासां काननस्य समूहस्य च्छेदलीलां अनायासेन खण्डनं, कर्तुं विधातुं, प्रवृत्तः उद्युक्तः, अभूदिति शेषः । स्रग्धरा वृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् ॥

**एवमिति** ॥ एवं इत्थं, एक एव असहाय एव, बलत्रितयं करितुरगपदातिरूपाणि त्रीणि बलानि, आकुलं क्षुभितं कुर्वन् सन्, कृपाणस्य असेः रुधिरेण रक्तेन च्छुरितं रूषितं अंसकूटं भुजशिखरदेशः यस्य सः तादृशः, शस्त्राणां आयुधानां प्रहारशतेन जर्झरितं दन्तुरितं उरु पृथुलं वक्षः यस्य सः तादृशस्सन्, सः, विन्ध्यकेतुः, चिराय चिरेण, श्रान्तः श्रमं प्राप्तस्सन्, युधि समरे, विनिहतः ध्वंसितः । उदात्तालङ्कारः । वसन्ततिलकं वृत्तम् ॥ १० ॥

**रुमण्वन्नित्यादि** ॥ अनुगच्छतः अनुसरतः, व्रीडिताः लज्जिताः । गुणे-

**रुम.**—देव, त्वद्विधानामेवंगुणैकपक्षपातिनां रिपोरपि गुणाः प्रीतिं जनयन्ति ।

**राजा**—विजयसेन, अस्ति किञ्चिदपत्यं विन्ध्यकेतोः । यत्रास्य परितोषस्य फलं दर्शयामि ?

**विज.**—देव, इदमपि विज्ञापयामि—एवं सबन्धुपरिवारे हते विन्ध्यकेतौ, तमनुसृतासु सहधर्मचारिणीषु, विन्ध्यशिखराश्रितेषु जनपदेषु विनष्टेषु, शून्यभूते तत्स्थाने, हा तात! हा मातरिति कृतकृपणप्रलापा विन्ध्यकेतोर्वेश्मन्यभिजातरूपा कन्यका काचित् तद्दुहितेत्यस्माभिरानीता द्वारि तिष्ठति । तां प्रति देवः प्रमाणम् ।

**राजा**—यशोधरे, गच्छ त्वमेव वासवदत्तायै समर्पय । वक्तव्या च देवी । भगिनीबुद्ध्या त्वयैव सर्वदा द्रष्टव्या गीतनृत्यवाद्यादिषु विशिष्टकन्यकोचितं सर्वं शिक्षयितव्या । यदा वरयोग्या भविष्यति तदा अस्मान् स्मारयेति ।

**प्रती.**—जं देवो आणवेदि । (इति निष्क्रान्ता ।)

---

१. यद्देव आज्ञापयति ।

---

कपक्षपातिनां गुणप्रियाणां, जनयन्ति उत्पादयन्ति (जनेर्ण्यन्ताल्लटि रूपम्) अपत्यं शिशुः । सहधर्मचारिणीषु पत्नीषु, जनपदेषु राष्ट्रवासिषु जनेषु, हा इति खेदे । कृतः रचितः कृपणः दीनः प्रलापः यया सा, वेश्मनि गृहे, अभिजातं मनोहरं रूपं यस्यास्सा तादृशी, प्रमाणं प्रमाता कर्तव्यविषयपरिज्ञातेत्यर्थः । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इति कोशः । यशोधरेति प्रतीहार्या नाम । समर्पय अधीनीकुरु । भगिनीबुद्ध्या सोदरीबुद्ध्या । विशिष्टकन्यका उत्तमकन्यका तस्याः उचितं अर्हं यथा तथा शिक्षयितव्या अध्यापयितव्या । वरयोग्या विवाहार्हा, वैतालिकः स्तुतिपाठकः तल्लक्षणन्तु भावप्रकाशे—'तत्तत्प्रहरकयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः । सरभसमेव वितालं गायन्वैतालिको भवति ॥' इति ॥

(नेपथ्ये वैतालिकः।)

लीलामङ्गलमज्जनोपकरणस्नानीयसम्पादिनः
सर्वान्तःपुरवारविभ्रमवतीलोकस्य ते सम्प्रति।
आयासस्खलदंशुकव्यवहितच्छायावदातैः स्तनैः
उत्क्षिप्तापरशातकुम्भकलशेवालंकृता स्नानभूः ॥११

**राजा**—(ऊर्ध्वमवलोक्य।) अये! कथं नभोमध्यमध्यास्ते भगवान् सहस्रदीधितिः? सम्प्रति हि—

आभात्यर्कांशुतापात्कथदिव शफरोद्वर्तनैर्दीर्घिकाम्भः
छत्राभं नृत्तलीलाशिथिलमपि शिखी बर्हभारं तनोति।

---

**लीलेति** ॥ ते, स्नानभूः अलङ्कृतेति सम्बन्धः। लीला क्रीडा तद्युक्तं यन्मङ्गलमज्जनं मङ्गलस्नानं तस्य उपकरणानि यानि स्नानीयानि स्नानार्हगन्धचूर्णतीर्थादीनि तानि सम्पादयति ताच्छील्येनेति तत्सम्पादी तस्य, सर्वः समस्तः यः अन्तःपुरवारविभ्रमवतीलोकः अन्तःपुरवाराङ्गनाजनः तस्य, आयासेन श्रमेण स्खलता स्वस्थानात् च्युतेन अंशुकेन स्तनोत्तरीयेण व्यवहिता दूरं प्रसरन्ती या छाया कान्तिः तया अवदातैः निर्मलतया भासमानैः, स्तनैः कुचमण्डलैः, (करणैः) उत्क्षिप्ताः ऊर्ध्वमुत्तम्भिताः अपरे स्नानगृहाङ्गणभूस्थापितस्वर्णघटेभ्योऽन्ये ये शातकुम्भकलशाः स्वर्णघटाः यस्यां सा तादृशीव, ते स्नानभूः, सम्प्रति इदानीं, अलङ्कृता भूषिता। उत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥

**आभातीति** ॥ दीर्घिकायाः वाप्याः अम्भः जलं (कर्तृ) शफराणां मीनानां उद्वर्तनैः उत्प्लवनैः (हेतुभिः) अर्कस्य सूर्यस्य तापात् क्वथदिव बुद्बुदाकारेणोर्ध्वं

छायाचक्रं तरूणां हरिणशिशुरुपैत्यालवालाम्बुलुब्धः
सद्यस्त्यक्त्वा कपोलं विशति मधुकरः कर्णपालीं गजस्य ॥

रुमण्वन् ! उत्तिष्ठ प्रविश्याभ्यन्तरमेव कृतयथोचितक्रियाः सत्कृत्य विजयसेनं कळिङ्गहतकोच्छित्तये प्रेषयामः !

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

क्षुभ्यदिव, आभाति प्रकाशते। शिखी मयूरः, बर्हभारं पिञ्छसमूहं, नृत्तलीलया नर्तनकेल्या शिथिलमपि मध्ये मध्ये गळितबर्हत्वाद्विरळमपि । छत्राभं आतपत्रवत्, तनोति विस्तृणोति । आतपवारणायेति भावः । हरिणशिशुः सारङ्गशिशुः, आलवालाम्बुनि लुब्धः तरुमूलबन्धास्थितजलपानसतृष्णस्सन्, तरूणां वृक्षाणां छायाचक्रं मण्डलाकारमनातपप्रदेशं, उपैति प्राप्नोति । मधुकरः भ्रमरोऽपि, गजस्य द्विरदस्य, कपोलं गण्डं, सद्यः, त्यक्त्वा उत्सृज्य, कर्णपाळीं श्रोत्रपुटं, विशति प्रविशति। स्वभावोक्तिः। स्रग्धरा वृत्तम् ॥ १२ ॥

अङ्कलक्षणन्तु—'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ।' इत्यादि 'अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ।' इति साहित्यदर्पणे ॥

इति श्रीकविशिखामणिसारस्वतसारज्ञ त. वाधूलश्रीनिवाससूरिविरचिते सारास्वादाभिधाने प्रियदर्शिकाव्याख्याने प्रथमोऽङ्कः ॥

# द्वितीयोऽङ्कः ।

(ततः प्रविशति विदूषकः ।)

**विदूषकः**—[1]णं भणिदोह्मि इन्दीवरिआए । वसंतअ अज्ज उववासणिअमट्ठिदा देवी वासवदत्ता सोत्थिवाअणणिमित्तं सद्दावेदित्ति । ता जाव धाराघरुज्जाणदिग्घिआए ण्हाइअ, देवीपासं गदुअ, कुक्कुटवादं करिस्सं । अण्णहा अम्हारिसा बह्मणा कहं राअउले पडिग्गहं करंति । (नेपथ्याभिमुखमवलोक्य) कहं एसो पिअवअस्सो अज्ज देवीए विरहु-क्कण्ठाविणोदणणिमित्तं धाराघरुज्जाणं पत्थिदो । ता जाव वअस्सेण सह जेव्व गदुअ, जहोद्दिट्ठमणुचिट्ठिस्सं ।

---

१. ननु भणितोऽस्मि इन्दीवरिकया । वसन्तक अद्य उपवासनियमस्थिता देवी वासवदत्ता स्वस्तिवाचननिमित्तं शब्दायत इति । तत् यावत् धारागृहोद्यान-दीर्घिकायां स्नात्वा, देवीपार्श्वं गत्वा, कुक्कुटवादं करिष्यामि । अन्यथा अस्मादृशाः ब्राह्मणाः कथं राजकुले प्रतिग्रहं कुर्वन्ति । कथं एष प्रियवयस्यः अद्य देव्याः विरहोत्कण्ठाविनोदननिमित्तं धारागृहोद्यानं प्रस्थितः । तद्यावत् वयस्येन सहैव गत्वा यथोद्दिष्टं अनुष्ठास्यामि ।

---

तत इत्यादि ॥ विदूषकः राज्ञः नर्मसहायेष्वन्यतमः । तथा चोक्तम्—"कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकस्स्यात् स्वकर्मज्ञः ॥" इति । स्वकर्म भोजनं इत्यपि तत्रैव विवृतम् । शब्दायते आकारयतीत्यर्थः । कुक्कुटवादं धनादिग्रहणार्थं दम्भचर्या । "कुक्कुटोऽनृतवादस्स्यात्" इति मेदिनी । अनृतवादश्च दम्भचर्यारूप एव । "स्याद्दाम्भिकः कापटिकः" इत्यमरात् । राजकुले राजगृहे । नेपथ्यं वेषपरिग्रहयोग्या कुशीलवैरधिष्ठिता यवनिकान्तर्भूमिः । उत्कण्ठा अभिलाषः, विनोदनं अपोहनम् ॥

( ततः प्रविशति सोत्कण्ठो राजा । )

**राजा—**

**क्षामां मङ्गलमात्रमण्डनभृतं मन्दोद्यतालापिनी-**
**मापाण्डुच्छविना मुखेन विजितप्रातस्तनेन्दुद्युतिम् ।**
**सोत्कण्ठं नियमोपवासविधिना चेतो ममोत्कण्ठते**
**तां द्रष्टुं प्रथमानुरागजनितावस्थामिवाद्य प्रियाम् ॥ १ ॥**

**विदू—**(उपसृत्य) सोत्थि[1] भवदे । वड्ढदु भवं ।

**राजा—**(विलोक्य) वसन्तक, कस्मात् प्रहृष्ट इव लक्ष्यसे ।

**विदू—**अच्चदि[2] क्खु देवी बम्हणं ।

**राजा—**यद्येवं किं तव ।

१. स्वस्ति भवते । वर्धतां भवान् ।
२. अर्चति खलु देवी ब्राह्मणम् ।

**क्षामामिति** ॥ क्षामां कृशां, मङ्गळमेव मङ्गळमात्रं हरिद्राकुङ्कुमताटङ्कादि तदेव मण्डनं अलङ्कारः तं बिभर्तीति तथोक्तां, मन्दं मृदु यथा तथा उद्यतः आलापः भाषणं तदस्याः अस्तीति तादृशीं, आपाण्डुच्छविना ईषद्धवळवर्णेन, मुखेन वदनेन, (करणेन) विजिता तिरस्कृता प्रातस्तनेन्दोः प्राभातिकचन्द्रस्य द्युतिः शोभा यया सा तां, नियमोपवासविधिना व्रतोपोषणादिव्यापारेण (अयं क्षामत्वादिषु हेतुः ) सोत्कण्ठां साभिलाषां, तां तादृशीं, प्रियां मत्प्रणयिनीं, प्रथमानुरागेण प्राथमिकप्रीत्या जनिता उत्पादिता, दशा अवस्था, यस्यास्सा तथा तामिव द्रष्टुं विलोकितुं, मम, चेतः मनः, उत्कण्ठते साभिलाषं वर्तते । शार्दूलविक्रीडितं वृत्तम् । उपमास्वभावोक्त्योस्संसृष्टिः ॥

**विदू**—(सगर्वं) [1]भो ईरिसो क्खु बह्मणो । जो चउव्वेद पंचवेद छट्ठवेद बह्मणसहस्सपज्जाउले राजउले पुढमं एव्व देवीसआसादो सोत्थिवाअणं लहेदि ।

**राजा**—(विहस्य) वेदसंख्ययैवावेदितं ब्राह्मण्यम् । तदागच्छ महाब्राह्मण धारागृहोद्यानमेव गच्छावः ।

**विदू**—[2]जं भवं आणवेदि ।

**राजा**—गच्छाग्रतः ।

**विदू**—[3]भो एहि गच्छह्म । (परिक्रम्यावलोक्य च) वअस्स पेक्ख पेक्ख—अविरदपडंतविविहकुसुमसुउमारसिलाअलुच्छंगस्स, परिमलणिलीणमहुअरभरभग्गवउलमालदीलदाजालअस्स, कमलगंधवहणुद्दाम-

---

१. भोः ईदृशः खलु ब्राह्मणः । यः चतुर्वेदपञ्चवेदषड्वेदब्राह्मणसहस्रपर्याकुले राजकुले प्रथममेव देवीसकाशात् स्वस्तिवाचनं लभते ।

२. यत् भवान् आज्ञापयति ।

३. भो एहि गच्छावः । भो वयस्य पश्य पश्य—अविरतपतद्विविधकुसुमसुकुमारशिलातलोत्सङ्गस्य, परिमलनिलीनमधुकरभरभग्नवकुलमालतीलताजालकस्य,

---

**स्वस्तीत्यादि** ॥ एतु आगच्छतु । लक्ष्यसे दृश्यसे । चत्वारः वेदाः येषां ते । पञ्च वेदाः येषां ते । षट् वेदाः येषां ते । महाब्राह्मणेत्युपहसनम् । नृपादीनां स्नानयोग्यं धारायन्त्रघटितं गृहं धारागृहं तत्र स्थितं उद्यानम् । अविरतं निरन्तरं यथा तथा पतन्ति विविधानि नानाप्रकाराणि यानि कुसुमानि प्रसूनानि तैः सुकुमारः अतिमनोहरः शिलातलोत्सङ्गः शिलामध्यप्रदेशः यस्य तत् तस्य, परिमळेन सौरभेण निलीनानां मधुकराणां भरेण भारेण भग्नानि विदलितानि वकुलानां केसराणां मालतीलतानां च जालकानि कलिकाः यस्मिन् तस्य, कमलानां तामरसानां

मारुअपडिबुद्धबंधूअबंधणस्स, अविरळतमालतरुपिहिदादवप्पआअस्स, धाराघरुज्जाणस्स, सस्सिरीअदं ।

**राजा**—वयस्य साध्वभिहितम् । अत्र हि—

**वृन्तैः क्षुद्रप्रवालस्थगितमिव तलं भाति शेफालिकानां**
**गन्धस्सप्तच्छदानां सपदि गजमदामोदमोहं तनोति ।**
**एते चोन्निद्रपद्मच्युतबहुलरजःपुञ्जपिङ्गाङ्गरागाः**
**गायन्त्यव्यक्तवाचः किमपि मधुलिहो वारुणीपानमत्ताः ॥**

---

कमलगन्धवहनोद्दाममारुतप्रतिबुद्धबन्धूकबन्धनस्य, अविरलतमालतरुपिहितातपप्रकाशस्य, धारागृहोद्यानस्य, सश्रीकताम् ।

---

गन्धस्य सौरभस्य वहनेन उद्दामः निरङ्कुशप्रसरः ( यद्वा ) गन्धस्य वहनं यस्य सः तादृशः उद्दामश्च यः मारुतः तेन प्रतिबुद्धं विकसितं बन्धूकबन्धनं बन्धुजीवकुसुमवृन्तं यस्मिन् तस्य, अविरलैः नीरन्ध्रैः तमालतरुभिः तापिञ्छवृक्षैः पिहितः आतपप्रकाशः सूर्यकान्तिः यस्मिन् तत् तस्य, धारागृहोद्यानस्य, सश्रीकतां शोभावैशिष्ट्यम् ॥

**वृन्तैरिति** ॥ शेफालिकानां निर्गुण्डीकुसुमानां । " शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ।" इत्यमरः । वृन्तैः रक्तवर्णैः प्रसवबन्धनैः (करणैः) तलं उद्यानप्रदेशः, क्षुद्रप्रवालैः सूक्ष्मविद्रुमखण्डैः स्थगितमिव आच्छादितमिव, भाति प्रकाशते । " भा दीप्तौ " परस्मैपदी । सप्तच्छदानां सप्तपर्णानां, गन्धः सौरभं, सपदि तत्क्षणे, गजस्य द्विपस्य यो मदः मदजलप्रवाहः तस्य आमोदमोहं वासनाभ्रान्तिं, तनोति विस्तृणोति । उन्निद्रेभ्यः विकसितेभ्यः पद्मेभ्यः पङ्कजेभ्यः च्युतैः गळितैः बहुलैः अमितैः रजसां पुञ्जैः समूहैः पिङ्गः पीतवर्णः अङ्गरागः अनुलेपनं येषां ते तादृशाः । वारुण्याः पुष्परसासवस्य पानेन मत्ताः समदाः, अत

**विदू**—भो वअस्स, एदं वि दाव पेक्ख पेक्ख—जो एसो अविरदपडंतकुसुमणिअरो अग्गपत्तंतरगलंतवरिसावसाणसमअसलिलबिंदू विअ लक्खीअदि सत्तिवण्णपाअवो ।

**राजा**—सम्यगुपलक्षितं वयस्येन । अत्र हि बह्वेव सदृशं जलदसमयस्य । तथाहि—

**बिभ्राणा मृदुतां शिरीषकुसुमश्रीहारिभिश्शाद्वलैः**
**सद्यः कल्पितकुट्टिमा मरकतक्षोदैरिव क्षालितैः ।**

---

१. भो वयस्य एतदपि तावत् प्रेक्षस्व प्रेक्षस्व—य एषः अविरतपतत्कुसुमनिकरः अग्रपत्रान्तरगलद्वर्षावसानसमयसलिलबिन्दुरिव लक्ष्यते सप्तपर्णपादपः ।

---

एव, अव्यक्तवाचः अपरिस्फुटवचनाः, एते मधुलिहः भ्रमराः, किमपि, गायन्ति शब्दायन्ते । "गै शब्दे" भ्वादिः । उपमाभ्रान्तिमत्स्वभावोक्तिसमासोक्तीनां संसृष्टिः । स्रग्धरा वृत्तम् ॥

**भो वयस्येत्यादि** ॥ भोस् इति सान्तो निपातः सम्बोधनार्थकः । सस्य रुत्वे 'भो भगो अघो अपूर्वस्य योऽशि' इत्यनेन रोर्यत्वे 'हलि सर्वेषाम्' इत्यनेन तस्य लोपे भो इति रूपम् । वयस्य मित्र, वयसा तुल्यः वयस्यः । प्रेक्षस्व प्रेक्षस्वेति आदरात् द्विरुक्तिः । अविरतं निरन्तरं यथा तथा पतन् अधः स्रंसमानः कुसुमनिकरः पुष्पसमूहः यस्य सः । अत एव अद्यापि इदानीमपि, अग्रपत्राणि पत्राग्राणि तेषां यत् अन्तरं मध्यं तस्मात् निर्गच्छन्तः बहिः स्रवन्तः, वर्षावसानसलिलबिन्दवः वृष्ट्यवसानकालिकजलबिन्दवः यस्य सः तादृश इव, सप्तपर्णपादपः सप्तच्छदवृक्षः । लक्ष्यते दृश्यते ॥

**बिभ्राणेति** ॥ शिरीषकुसुमानां कपीतनपुष्पाणां, 'शिरीषस्तु कपीतनः । भण्डीलः' इत्यमरसिंहः । श्रियं शोभां हरन्ति ताच्छील्येनेति हारिणः तैः, शाद्वलैः

एषा संप्रति बन्धनाद्विगलितैर्बन्धूकपुष्पोत्करै-
रद्यापि क्षितिरिन्द्रकोपकशतैश्छन्नेव संलक्ष्यते ॥

( ततः प्रविशति चेटी । )

**चेटी**—आणत्तम्हि दीवीए वासवदत्ताए—हञ्जे इन्दीवरिए मए अगत्थमहेसिणो अग्घो दादव्वो । ता गच्छ तुमं । सेहालिआपुप्फाइं लहु गेण्हिअ आअच्छेत्ति । एसा वि आरण्णिआ धाराघरुज्जाणदिग्घिआए जाव एव्व अत्थाहिलासिणा सुय्येण ण मउळाविज्जन्ति कमलाइं,

---

१. आज्ञप्तास्मि देव्या वासवदत्तया—हञ्जे इन्दीवरिके मया अगस्त्यमहर्षेः अर्घ्यं दातव्यम् । तद् गच्छ त्वम् । शेफालिकापुष्पाणि लघु गृहीत्वा आगच्छेति । एषापि आरण्यिका धारागृहोद्यानदीर्घिकायां यावदेव अस्ताभिलाषिणा सूर्येण न

---

शादहरितदेशैः, मृदुतां मार्दवं बिभ्राणा वहन्ती, अत एव, क्षालितैः शोधितैः, मरकतक्षोदैः इन्द्रनीलरत्नचूर्णैः, सद्यः कल्पितकुट्टिमेव रचितवेदिरिव, विद्यमाना, एषा, क्षितिः भूमिः, सम्प्रति अद्य, बन्धनात् वृन्तात्, विगलितैः विश्लथैः, बन्धूकपुष्पोत्करैः बन्धुजीवककुसुमसमूहैः, अद्यापि इदानीमपि, इन्द्रकोपकशतैः विचित्रवर्णालङ्कृतपक्षयुक्तेन्द्रकीटनिकरैः, छन्नेव आस्तृतेव, संलक्ष्यते दृश्यते । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

**आज्ञप्तास्मीत्यादि** ॥ देव्या राज्ञ्या, हञ्जे इति चेटी नाट्ये समाहूयते । 'हण्डे हञ्जे हळाह्वाने नीचां चेटीं सखीं प्रति ।' इत्यमरः । अर्घ्यः पूजासाधनं पाद्याचमनीयमधुपर्कादिः । 'पादार्घाभ्याञ्च' इत्यनेन यत्प्रत्ययः । दातुं योग्यः दातव्यः । लघु शीघ्रं, गृहीत्वा आदाय, दीर्घिका वापी । विकसितानि विकस्वराणि,

दाव एव्व अवचिणुअ आअच्छदुत्ति । एसा तवस्सिणी आरण्णिआ तं दिग्घिअं ण जाणादि । ता गेण्हिअ तं गमिस्सं । ( नेपथ्याभिमुखमवलोक्य) इदो इदो आरण्णिए ।

( ततः प्रविशत्यारण्यिका । )

**आर**—(सबाष्पमात्मगतम्) तह णाम तारिसे वंसे उप्पण्णा, दासजणं आणाविअ, संपदं मए परस्स आणत्ती कादव्वत्ति णत्थि देवस्स दुक्करं । अहवा मह एव्व एसो दोसो, जेण जाणंतीए वि ण वावादिओ अप्पा । ता किं संपदं करिस्सं । अहवा दुक्करं दाणिं मए चिंतिदं । ण उण अप्पणो महग्घं वंसं पआसअंतीए मए लहूकिदो अप्पा । का गई । जहभणिदं अणुचिट्ठिस्सं ।

**चेटी**—इदो एहि आरण्णिए ।

---

मुकुलयन्ते कमलानि, तावदेव अपचित्य आगच्छत्विति । एषा तपस्विनी आरण्यिका तां दीर्घिकां न जानाति । तत् गृहीत्वा तां गमिष्यामि । इत इत आरण्यिके ।

१. तथा नाम तादृशे वंशे उत्पन्ना, दासजनमाज्ञाप्य, सांप्रतं मया परस्य आज्ञप्तिः कर्तव्येति नास्ति दैवस्य दुष्करम् । अथवा ममैवैष दोषः, येन जानत्यापि न व्यापादित आत्मा । तत् किं सांप्रतं करिष्यामि । अथवा दुष्करमिदानीं मया चिन्तितम् । न पुनः आत्मनः महार्घं वंशं प्रकाशयन्त्या मया लघूकृत आत्मा । का गतिः । यथाभणितमनुतिष्ठामि ।

२. इत एहि आरण्यिके ।

---

तपस्विनी शोच्या, अरण्ये भवा आरण्यिका । 'अरण्यान्मनुष्ये' इत्यनेन अरण्यशब्दाद्वुञ् । "प्रत्ययस्थात्" इति इत् ॥

**तथेत्यादि** ॥ आज्ञप्तिः आज्ञा, न व्यापादितः न घातितः । प्रकाशयन्त्या

**आर**—ईअं आअच्छामि । (श्रमं नाटयति) हञ्जे अवि दूरे दिग्घिए ।

**चेटी**—एसा सेहालिआगुम्मंतरिदा । ता एहि ओदरह्म ।

(अवतरणं नाटयतः)

**राजा**—वयस्य किमन्यदिव चिन्तयंस्तिष्ठसि । ननु ब्रवीमि बह्वेव सदृशं जलदसमयस्येति । (विश्राणेत्यादि पठति)

**विदू**—(सक्रोधम्) भो तुमं दाव एदं अण्णं च पेक्खन्तो उक्खण्ठाणिब्भरं अत्ताणं विणोदेसि । मम उण बह्मणस्स सोत्थिवाअणवेला अदिक्कामदि । ता जाव अहं तुरिअं दिग्घिआए ण्हाइअ देवीसआसं गमिस्सं ।

**राजा**—मूर्ख पारं गता एव वयं दीर्घिकायाः । एवमनेकेन्द्रियसुखमनुभवन्नपि नोपलक्षयसि । तथाहि पश्य—

---

१. इयं आगतास्मि । हञ्जे अपि दूरे दीर्घिका ।

२. एषा शेफालिकागुल्मान्तरिता । तदेहि अवतरावः ।

३. भोः त्वं तावत् एतत् अन्यच्च पश्यन् उत्कण्ठानिर्भरं आत्मानं विनोदयसि। मम पुनः ब्राह्मणस्य स्वस्तिवाचनवेला अतिक्रामति । तत् यावदहं त्वरितं दीर्घिकायां स्नात्वा देवीसकाशं गमिष्यामि ।

---

स्फुटीकुर्वत्या, यथाभणितं यथोक्तम् । गुल्मः स्तम्बः, 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । अवतरावः सोपानमार्गेण दीर्घिकावरोहणं कुर्वः ॥

**भो इत्यादि** ॥ उत्कण्ठया उत्कलिकया निर्भरं पूर्णं स्तब्धं वा आत्मानं स्वं चित्तं, विनोदयसि आनन्दयसि । स्वस्तिवाचनवेला स्वस्तिवाचननिमित्तं ब्राह्मणेभ्यो दीयमानमोदकभक्षणावसरः । अतिक्रामति अत्येति । पारं तीरदेशम् । नोपलक्षयसि न जानासि ॥

श्रोत्रं हंसस्वनोऽयं सुखयति दयितानूपुराह्लादकारी
दृष्टिप्रीतिं विधत्ते तटतरुविवरालक्षिता सौधपाली ।
गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यं
गात्रस्याह्लादमेते विदधति मरुतो वारिसंस्पर्शशीताः ॥

तदेहि । दीर्घिकामुपसर्पावः। (परिक्रम्यावलोक्य च) वयस्य, पश्य पश्य—

उद्यानदेवतायाः स्फुटपंकजकान्तिहारिणी स्वच्छा ।
दृष्टिरिव दीर्घिकेयं रमयति मां दर्शनेनैव ॥

---

श्रोत्रमिति ॥ दयितायाः प्रेयस्याः, नूपुरं मञ्जीरं, (लक्षणया तत्सम्बन्धीध्वनिरत्र विवक्षितः ।) तद्वत् आह्लादकारी आनन्दविधायी, अयं हंसस्वनः मराळकूजितं, (कर्ता) श्रोत्रं श्रवणं, सुखयति सौख्ययुक्तं करोति । "तत्करोति तदाचष्टे" इति सुखवच्छब्दाण्णिच् । तटे कूले विद्यमानानां तरूणां वृक्षाणां विवरेभ्यः आ समन्तात् लक्षिता, ईषल्लक्षिता वा, सौधपाली दीर्घिकामण्टपोपरितनहर्म्यश्रेणिः, दृष्टेः लोचनस्य, प्रीतिं आनन्दं, विधत्ते करोति । परिमलेन सौरभेण पटुना अधिकेन अम्भोरुहाणां सरोजानां गन्धेन सौगन्ध्येन, घ्राणसौख्यं घ्राणेन्द्रियतृप्तिः, जायते उत्पद्यते । वारिणः जलस्य संस्पर्शेन संसर्गेण शीताः शिशिराः, एते मरुतः वाताः, गात्रस्य अङ्गस्य आह्लादं आनन्दं, विदधति रचयन्ति । स्वभावोक्तिः । स्रग्धरा वृत्तम् ॥

उद्यानेति ॥ स्फुटानां विकस्वराणां पङ्कजानां तामरसानां कान्त्या हारिणी मनोहरा । पक्षे कान्तिरिव हारिणी हृद्या, उद्यानदेवतायाः, स्वच्छा निर्मला, दृष्टिरिव लोचनमिव, (विद्यमाना) इयं, दीर्घिका वापी, अद्य इदानीं, मां, दर्शनेनैव विलोकनमात्रेण, रमयति आनन्दयति । श्लेषोत्थापितोपमालङ्कारः । उपगीतिः ॥

**विदू**—( सकौतुकम् ) भो वअस्स, पेक्ख पेक्ख । का उण एसा कुसुमपरिमलसुअन्धिवेणीमहुअरावली, विद्दुमलदारुणहत्थपल्लवा, उज्जलंततणुकोमलबाहुलदा, सच्चं पच्चक्खचरी विअ उज्जाणदेवदा इत्थिआ दीसई ।

**राजा**—( सकौतुकं विलोक्य ) वयस्य, निरतिशयस्वरूपशोभाजनितबहुविकल्पेयम् । यत् सत्यं तन्नावगच्छामि । पश्य—

**पातालाद्भुवनावलोकनधिया किं नागकन्योत्थिता,**
**मिथ्या तत्खलु, दृष्टमेव हि मया, तस्मिन् कुतस्त्वीदृशी ।**

---

१. भो वयस्य, प्रेक्षस्व प्रेक्षस्व । का पुनरेषा कुसुमपरिमलसुगन्धिवेणीमधुकरावली, विद्रुमलतारुणहस्तपल्लवा, उज्ज्वलत्तनुकोमलबाहुलता, सत्यं प्रत्यक्षचरीवोद्यानदेवता स्त्री दृश्यते ।

---

**भो वयस्येत्यादि** ॥ कुसुमानां सुमनसां परिमळेन सौरभेण सुगन्धिः मनोज्ञसौरभयुक्ता मधुकरावलीव भ्रमरश्रेणीव वेणी यस्यास्सा तादृशी, विद्रुमलतेव प्रवाळलतेव अरुणः रक्तः हस्तपल्लवः करकिसलयं यस्यास्सा तादृशी । उज्ज्वलन्त्यौ तन्व्यौ सूक्ष्मे कोमले मृदुले बाहुलते भुजौ यस्यास्सा तादृशी, प्रत्यक्षचरी आभिमुख्यं सञ्चरन्ती, उद्यानदेवतेव, स्त्री ललना दृश्यते ॥

**वयस्येत्यादि** ॥ इयं, निरतिशयं सर्वोत्तमं यत् स्वरूपं आकृतिः, या शोभा कान्तिः ताभ्यां जनिताः उत्पादिताः बहवः नानाविधाः विकल्पाः यया सा तादृशी । नावगच्छामि न जानामि ॥

**पाताळादिति** ॥ भुवनानां मध्यमलोकानां अवलोकनधिया दर्शनकौतूहलेनेत्यर्थः । नागकन्या भुजङ्गकन्या, पातालात् उत्थिता किम् ? विचार्याक्षिपति—मिथ्येत्यादिना । तत् , मिथ्या असमञ्जसम् । मया, दृष्टमेव खलु अवलोकितमेव हि । तस्मिन् तत्र पाताले, ईदृशी तु एवंजातीया, ललना, पुनः कुतः, नास्त्येवेत्यर्थः।

मूर्ता स्यादिह कौमुदी, न घटते तस्या दिवा दर्शनं,
केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥

विदू—[1]एसा देवीए परिचारिआ इन्दीवरिआ आअच्छदि । ता गुम्मन्तरिदा भविअ पेक्खह्म ।

(उभौ तथा कुरुतः)

चेटी—(नलिनीपत्रग्रहणं नाटयन्ती) [2]आरण्णिए अवचिणु तुमं पदुमाइं । अहं वि एदस्सिं णलिणीपत्तम्मि सेहालिआकुसुमाइं अवचिणुअ देवीए सआसं गमिस्सं ।

राजा—वयस्य, आलाप इव श्रूयते । तदवहितास्शृणुमः । कदाचिदत एव व्यक्तीभविष्यति ।

चेटी—(गमनं नाटयति)

---

१. एषा देव्याः परिचारिका इन्दीवरिका आगच्छति । तत् गुल्मान्तरिता भूत्वा पश्यामः ।

२. आरण्यिके अपचिनु त्वं पद्मानि । अहमपि एतस्मिन् नलिनीपत्रे शेफालिकाकुसुमानि अपचित्य देव्यास्सकाशं गमिष्यामि ।

---

मूर्ता मूर्तियुक्ता, कौमुदी चन्द्रिका, इह अत्र, स्यात् वा । एतदप्याक्षिपति—नेति । तस्याः कौमुद्याः, दिवा अह्नि, दर्शनं निरीक्षणं, न घटते । हस्ततलस्थितेन करतलगतेन, कमलेन तामरसेन सह, श्रीरिव लक्ष्मीरिव, आलोक्यते निरीक्ष्यते । इयं का । सन्देहालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

एषेत्यादि ॥ अवचिनु गृहाण । अवहिताः सावधानाः । व्यक्तीभविष्यति

**आर**—[1]हला इन्दीवरिए, ण सक्कुणोमि तुए विणा मुहूत्तं वि एत्थ आसिदुं ।

**चेटी**—(विहस्य) [2]जादिसं अज्ज मए देवीए मन्तिदं सुदं तारिसं चिरं एव्व मए विणा तुए आसिदव्वं ।

**आर**—(सविषादं) [3]किं देवीए मन्तिदं ।

**चेटी**—[4]तदा अहं महाराएण भणिदा । जह—जा एसा विंझ-केदुदुहिदा जदा वरजोग्गा भविस्सदि, तदा अहं सुमरावइदव्वोत्ति । ता संपदं महाराअं सुमरावेमि । जेण से वरचिन्ताए पय्याउलो भविस्सदि ।

**राजा**—(सहर्षं) इयं सा विन्ध्यकेतोर्दुहिता । (सानुतापं) चिरं मुषितास्स्मो वयम् । वयस्य निर्दोषदर्शना कन्यका । विस्रब्धमिदानीं पश्यामः ।

---

१. हला इन्दीवरिके, न शक्नोमि त्वया विना मुहूर्तमप्यत्रासितुम् ।

२. यादृशं अद्य मया देव्याः मन्त्रितं श्रुतं तादृशं चिरमेव मया विना त्वया आसितव्यम् ।

३. किं देव्या मन्त्रितम् ।

४. तदा अहं महाराजेन भणिता । यथा—यैषा विन्ध्यकेतुदुहिता यदा वर-योग्या भविष्यति । तदा अहं स्मारयितव्य इति । तत् साम्प्रतं महाराजं स्मारया-मि । येन अस्याः वरचिन्तया पर्याकुलो भविष्यति ।

---

स्पष्टीभविष्यति । सानुतापं सपश्चात्तापम् । विस्रब्धं यथा तथा यथेच्छमित्यर्थः ।

**आर—**(सरोषम्) [1]ता गच्छ तुमं ण मह तुए असंबद्धपलाविणीए पयोअणं ।

**चेटी—**(अपसृत्य पुष्पापचयं नाटयति)

**राजा—**अहो सुतरां प्रकटीकृतमाभिजात्यं धीरतया । वयस्य धन्यः खल्वसौ, य एतदङ्गस्पर्शसुखभाजनं भविष्यति ।

**आर—**(कमलापचयं नाटयति)

**विदू—**[2]भो वअस्स, पेक्ख पेक्ख । अच्चरिअं अच्चरिअं । एसा सलिलचलंतकरपल्लवपहाविच्छुरिदेण ओहसिअसोहं करेदि कमलं अवचिणंती ।

**राजा—**स्वल्पमेवैतत् पश्य—

अच्छिन्नामृतवृष्टिपातसदृशीं प्रीतिं ददत्या दृशां
यातायां विगलत्पयोधरपटाद्द्रष्टव्यतां कामपि ।

---

१. तत् गच्छ त्वं न मम त्वया असंबद्धप्रलापिन्या प्रयोजनम् ।

२. भो वयस्य, पश्य पश्य । आश्चर्यं आश्चर्यम् । एषा सलिलचलत्करपल्लवप्रभाविच्छुरितेन अपहसितशोभं करोति कमलमपचिन्वन्ती ।

---

असम्बद्धप्रलापिन्या पूर्वोत्तरसन्दर्भविरुद्धभाषणशीलया आभिजात्यं सत्कुलप्रसूतत्वं । धन्यः भाग्यवान् "धनगणं लब्धा" इत्यनेन धनशब्दाद्यत् । भाजनं पात्रम् । कमलापचयं तामरसपुष्पसङ्ग्रहणम् ॥

**अच्छिन्नेति** ॥ दृशां द्रष्टृजनलोचनानां, अच्छिन्ना विच्छेदरहिता या अमृतवृष्टिपातः पीयूषधारासम्पातः तत्सदृशीं तत्समानां, प्रीतिं आह्लादं, ददत्याः दिशत्याः विगलतः स्वस्थानात् स्रंसमानात् पयोधरपटात् स्तनोत्तरीयात् (हेतोः)

अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गताः
नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥

**आर**—(भ्रमरबाधां नाटयन्ती) हद्धि हद्धि एदे क्खु अवरे परिवज्जिअ कमलणीलुप्पलवणं समापडन्ता दिउणदरं आआसअन्ति मं दुट्ठमहुअरा। (उत्तरीयेण मुखं पिदधाति। सभयं) हला इंदीवरिए, परित्ताहि मं परित्ताहि मं। एदे क्खु दुट्ठमहुअरा परिभविस्संति।

---

१. हा धिक् हा धिक्। एते खलु अपरे परिवर्ज्य कमलनीलोत्पलवनं समापतन्तः द्विगुणतरं आयासयन्ति मां दुष्टमधुकराः। हला इन्दीवरिके परित्रायस्व मां परित्रायस्व माम्। एते खलु दुष्टमधुकराः परिभविष्यन्ति।

---

कामपि द्रष्टव्यतां अनिर्वचनीयां सौन्दर्यभङ्गीं, यातायाः प्राप्तायाः, अत एव, चन्द्रमसः चन्द्रस्य तनोरिव स्थितायाः अस्याः पुरतो दृश्यमानायाः लोकसुन्दर्याः, करस्पर्शास्पदत्वं हस्तसम्बन्धगोचरत्वं, (किरणसम्बन्धास्पदत्वमिति च) गता अपि प्राप्ता अपि, एते पद्माः तामरसानि, "वा पुंसि पद्मम्" इत्यमरः। सहसा झटिति, न मुकुलीभवन्तीति यत्, न सङ्कुचन्तीति यत्, तदेव तादृशमुकुलीभावाभाव एव, अद्भुतं आश्चर्यम्। चन्द्रकरस्पर्शस्य पद्मसङ्कोचहेतुत्वेऽपि तत्कार्यस्य सङ्कोचस्यासम्भवादाश्चर्यम्। विशेषोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥

**हत्यादि** ॥ हेति खेदे, समापतन्तः सम्मुखमागच्छन्तः, आयासयन्ति खेदयन्ति। पिदधाति आच्छादयति। परित्रायस्व रक्ष 'आबाधे च' इत्यनेन द्विरुक्तिः ॥

**विदू**—भो वअस्स पुण्णा दे मणोरहा । जाव एव्व एसा दासी णाअच्छइ, दाव एव्व तुमं तुण्हीओ भविअ उपसप्प । एसावि सलिलसद्दसूइदेण पदसंचारेण इन्दीवरिआ आअच्छदित्ति जाणिअ सअं एव्व तुमं ओलंबिस्सदि ।

**राजा**—साधु वयस्य साधु । कालानुरूपमुपदिष्टम् ।

(इत्यारण्यिकासमीपमुपसर्पति ।)

**आर**—(पदशब्दाकर्णनं नाटयन्ती ।) इन्दीवरिए लहु उवसप्प । आउलीकदह्मि दुट्ठमहुअरेहिं । (इति राजानमवलम्बते ।)

**राजा**—(कण्ठे गृह्णाति ।)

**आर**—(उत्तरीयं मुखादपनीय राजानमपश्यन्ती भ्रमरावलोकनं नाटयति ।)

**राजा**—(स्वोत्तरीयेण भ्रमरान्निवारयन् ।)

---

१. भो वयस्य पूर्णाः ते मनोरथाः । यावदेव एषा दासी नागच्छति, तावदेव त्वं तूष्णीकः भूत्वा उपसर्प । एषापि सलिलशब्दसूचितेन पदसञ्चारेण इन्दीवरिका आगच्छतीति ज्ञात्वा स्वयमेव त्वामवलम्बिष्यते ।

२. इन्दीवरिके लघु उपसर्प । आकुलीकृतास्मि दुष्टमधुकरैः ।

---

**भो वयस्येत्यादि** ॥ तूष्णीकः अवचनः । उपसर्प समीपं गच्छ । आलम्बिष्यते आश्रयिष्यते ॥

अयि विसृज विषादं भीरु ! भृङ्गास्तवैते
परिमलरसलुब्धा वक्त्रपद्मे वसन्ति ।
विकिरसि यदि भूयस्त्रासलोलायताक्षी
कुवलयवनलक्ष्मीं, तत्कुतस्त्वां त्यजन्ति ॥

**आर**—( साध्वसं नाटयन्ती ) [1]कहं ण एसा इन्दीवरिआ । ( सभयं राजानं त्यक्त्वा अपसरन्ती ) इन्दीवरिए लहु एव्व आअच्छ आअच्छ । परित्ताहि मं ।

**विदू**—[2]होदि सअलभुवणपरित्ताणसमत्थेण वच्छराएण परित्ताअन्ती वि किं चेडिं आक्कन्दसि ।

---

१. कथं न एषा इन्दीवरिका । इन्दीवरिके लघु एव आगच्छ आगच्छ । परित्रायस्व माम् ।

२. भवति सकलभुवनपरित्राणसमर्थेन वत्सराजेन परित्रायमाणापि किं चेटीं आक्रन्दसि ।

---

**अयीति** ॥ अयीति कोमलामन्त्रणे । अयि भीरु, विषादं दुःखं, विसृज त्यज । एते भृङ्गाः भ्रमराः, परिमळरसे कुसुमगतसौगन्ध्यातिशायिसौगन्ध्ये लुब्धाः सतृष्णाः सन्तः, तव वक्त्रपद्मे मुखारविन्दे, वसन्ति । भूयोऽपि पुनरपि, त्रासेन भयेन लोले चञ्चले आयते दैर्घ्ययुक्ते च अक्षिणी यस्यास्सा एवंभूता सती, कुवलयवनलक्ष्मीं नीलनीरजवनशोभां विकिरसि यदि विक्षिपसि यदि, तत् तदा, ते भ्रमराः, त्वां, कुतः कस्मात्, त्यजन्ति । न त्यजन्त्येवेत्यर्थः । काव्यार्थापत्तिरलङ्कारः । मालिनी वृत्तम् ॥

**कथमित्यादि** ॥ अपसरन्ती दूरतो गच्छन्ती । लघु शीघ्रं, आगच्छ आयाहि । परित्रायस्व रक्ष । त्रैङ् पालने । आक्रन्दसि आकारयासि । तातस्य

**राजा**—( अयि विसृजेत्यादि पुनः पठति । )

**आर**—(राजानमवलोक्य सस्पृहं, सलज्जं च । आत्मगतम् ) [1]अअं सो महाराओ, जस्स अहं तादेण दिण्णा । ठाणे क्खु तादस्स पक्खवादो । (आकुलतां नाटयति । )

**चेटी**—[2]आआसिआ क्खु आरण्णिआ दुट्ठमहुअरेहिं । ता जाव उवसप्पिअ समास्सासेमि । आरण्णिए मा भाआहि मा भाआहि । एसा आअदह्मि ।

**विदू**—[3]भो ओसर ओसर । एसा क्खु इन्दीवरिआ आअदा । एदं उत्तंतं पेक्खिअ देवीए णिवेदइस्सदि । (अङ्गुल्या निर्दिश्य । ) ता इदं एव्व कदलीघरं पविसिअ चिट्ठह्म ।

( उभौ ससम्भ्रममपसरणं नाटयतः । )

---

१. अयं स महाराजः । यस्याहं तातेन दत्ता । स्थाने खलु तातस्य पक्षपातः।

२. आयासिता खलु आरण्यिका दुष्टमधुकरैः । तद्यावत् उपसर्प्य समाश्वासयामि । आरण्यिके मा भैषीः मा भैषीः । एषा आगतास्मि ।

३. भोः अपसर अपसर । एषा खलु इन्दीवरिका आगता । एतत् वृत्तान्तं प्रेक्ष्य देव्या निवेदयिष्यति । तत् इदमेव कदलीगृहं प्रविश्य तिष्ठावः ।

---

मम जनकस्य विन्ध्यकेतोः । पक्षपातः प्रेम । स्थाने युक्तम् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । आयासिता क्लेशिता । समाश्वासयामि चित्तस्वास्थ्यमापादयामि । उपगताऽस्मि समीपं प्राप्ताऽस्मि । अपसर व्यवहितो भव । सम्भ्रमेण द्विरुक्तिः

**चेटी**—(उपसृत्य) आरण्णिए[1] कमलसरिसस्स तुह वदणस्स अअं दोसो। जं महुअरा एव्वं अवरज्झन्ति। (हस्ते गृहीत्वा) ता एहि गच्छह्म। परिणदो दिअहो।

(गमनं नाटयतः।)

**आर**—(कदलीगृहाभिमुखं विलोक्य) हञ्जे[2] इन्दीवरिए, अदिसिसिरदाए सलिलस्स ऊरुकंपो विअ समुप्पण्णो। ता सणिअं गच्छह्म।

**चेटी**—तह[3]। (इति निष्क्रान्ते।)

**विदू**—भो[4] एहि णिक्कमह्म। तं गेण्हिअ एसा दासीए सुदा इन्दीवरिआ गदा। (तथा कुरुतः।)

**राजा**—कथं गता। (निश्वस्य) सखे वसन्तक, न खल्वविघ्नमभिलषितमधन्यैः प्राप्यते। (विलोक्य) सखे, पश्य पश्य,

---

१. आरण्यिके कमलसदृशस्य तव वदनस्य अयं दोषः, यत् मधुकरा एवमपराध्यन्ति। तत् एहि गच्छावः। परिणतः दिवसः।

२. हञ्जे इन्दीवरिके, अतिशिशिरतया सलिलस्य ऊरुकम्प इव समुत्पन्नः। तत् शनैर्गच्छावः।

३. तथा।

४. भो एहि निष्क्रामावः। तां गृहीत्वा एषा दास्याः सुता इन्दीवरिका गता।

---

परिणतः शान्तसूर्यातपः। अभिलषितं वाञ्छितं वस्तु, अधन्यैः भाग्यहीनैः, अविघ्नं यथा तथा, न प्राप्यते॥

आबद्धमुखमपीदं कण्टकितं कमलकाननं तस्याः ।
सुकुमारपाणिपल्लवसंस्पर्शसुखं कथयतीव ॥ ९ ॥

(निश्वस्य) क इदानीमभ्युपायस्तां द्रष्टुम् ।

**विदू**—[1]भो तुमं एव्व पुत्तलिअं भञ्जिअ दाणिं रोदिसि । ण मह क्खु बह्मणस्स वअणं करेसि ।

**राजा**—किं मया न कृतम् ।

**विदू**—[2]तं दाणिं विसुमरिदं । तह तुण्हीको भविअ उपसप्पत्ति मए भणिदो अदिसंकटे जं भवं पवेसिअ अलिअपण्डिच्चदुव्विदद्धो

---

१. भोः त्वमेव पुत्तलिकां भङ्क्त्वा इदानीं रोदिषि । न मम खलु ब्राह्मणस्य वचनं करोषि ।

२. तदिदानीं विस्मृतम् । तदा तूष्णीको भूत्वा उपसर्पेति मया भणितः अति-सङ्कटे यद्भवान् प्रविश्य अलीकपाण्डित्यदुर्विदग्धः "अयि विसृज विषादं भीरु भृङ्गाः

---

**आबद्धेति** ॥ इदं प्रत्यक्षं दृश्यमानं, कमलकाननं सरोजवनं, आबद्धमुख-मपि सूर्यास्तमयनिबन्धनमुकुलीभावयुक्तमपि, कण्टकितं सञ्जातकण्टकं (सरोमाञ्च-मित्यपि) हेतुगर्भं विशेषणमिदम् । कण्टकवत्त्वाद्धेतोरित्यर्थः । तस्याः आरण्यिकायाः सुकुमारः अतिमृदुलः यः पाणिपल्लवः करकिसलयं तस्य संस्पर्शेन जातं सुखं, कथयतीव प्रकटयतीव । रोमाञ्चादीनां हर्षानुभावत्वादिति भावः । उत्प्रेक्षाल-ङ्कारः । पथ्यार्या वृत्तम् ॥

**भो इत्यादि** ॥ पुत्तलिका पाञ्चालिका । यथा बालाः स्वयमेव स्वीयसाल-भञ्जिकां भङ्क्त्वा सालभञ्जिकार्थं रुदन्ति तद्वत् भवानपीत्यर्थः । अलीकपाण्डित्यं

"अइ विसिअ विसादं भीरु भंगा तवे" त्ति एदेहिं कडुअवअणेहिं भञ्जिअ संपदं किं रोदिसि । किं पुणो वि उवाअं पुच्छसि ।

**राजा**—कथं समाश्वासनमपि निर्भर्त्सनमिति गृहीतं मूर्खेण ।

**विद्**—जाणिदं एव्व को एत्थ मुक्खोत्ति । ता किं एदिणा । अत्थाहिलासी भअवं दिवसअरो । ता एहि अब्भन्तरं एव्व पविसह्म ।

**राजा**—(विलोक्य) अये परिणतप्रायो दिवसः । सम्प्रति हि—

**हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता**
**रागोऽस्मिन् मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते ।**

---

तव" इति एतैः कटुकवचनैः भङ्क्त्वा साम्प्रतं किं रोदिषि । किं पुनरपि उपायं पृच्छसि ।

१. ज्ञातमेव कोऽत्र मूर्ख इति । तत् किमेतेन । अस्ताभिलाषी भगवान् दिवसकरः । तदेहि अभ्यन्तरमेव प्रविशावः ।

---

मिथ्यावैदुष्यं तेन दुर्विदग्धः पण्डितमानीत्यर्थः । कटुकवचनैः तीक्ष्णोक्तिभिः । निर्भर्त्सनं तर्जनम् । अभ्यन्तरं गृहमध्यम् ॥

**हृत्वेति** ॥ इयं दिनश्रीः दिवसलक्ष्मीः, पद्मानां सरसिजानां वनस्य काननस्य द्युतिं शोभां, हृत्वा स्वीकृत्य, मम, प्रियतमा प्रेयसी आरण्यिकेव गता । अस्मिन् सवितुः बिम्बे सूर्यमण्डले, मम चेतसीव हृदये इव, रागः रक्तिमा (अनुराग इत्यपि) अधिकं अमितं यथा तथा, लक्ष्यते दृश्यते । चक्राह्वः चक्रवाकपक्षी,

चक्राह्वोऽहमिव स्थितस्सहचरीं ध्यायन्नलिन्यास्तटे
सञ्जातास्सहसा ममेव भुवनस्याप्यन्धकारा दिशः ॥

( इति निष्क्रान्तास्सर्वे । )

इति द्वितीयोऽङ्कः ॥

---

अहमिव, सहचरीं स्वप्रणयिनीं, ध्यायन् सन् चिन्तयन् सन्, नलिन्याः सरोजिन्याः, तटे कूले, स्थितः । ममेव, भुवनस्यापि जगतोऽपि, दिशः आशाः सहसा झटिति, अन्धकाराः अन्धकारवत्यः, सञ्जाताः सम्पन्नाः । अन्धकारशब्दात् मत्वर्थीयः 'अर्श आदिभ्योऽच्' इत्यनेन अच् प्रत्ययः । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

इति श्रीसारस्वतसारज्ञकविशिखामणि तट्टै वाधूलश्रीनिवाससूरिविरचिते सारास्वादाख्याने प्रियदर्शिकाव्याख्याने द्वितीयोऽङ्कः समाप्तः ॥

# तृतीयोऽङ्कः ॥

( ततः प्रविशति मनोरमा )

**मनोरमा**—आणत्तह्मि देवीए वासवदत्ताए—"हञ्जे मणोरमे जं संकिच्चाअणीए अय्यउत्तस्स मह अ चरिदं णाडओवणिबद्धं, तस्स णच्चिदव्वसेसं तुझेहिं कोमुदीमहोसवे णच्चिदव्वंति"। हिओ क्खु आरण्णिआए पिअसहीए सुण्णहिअआए अण्णहा एव्व णच्चिदं। अज्ज उण वासवदत्ताए वेसं कदुअ तह णच्चिदे देवीए कोवो हुविस्सदि । ता कहिं दाव तं पेक्खिअ उवालहिस्सं। (विलोक्य) एसा आरण्णिआ

---

१. आज्ञप्तास्मि देव्या वासवदत्तया—"हञ्जे मनोरमे यत् साङ्कृत्यायन्या आर्यपुत्रस्य मम च चरित्रं नाटकोपनिबद्धं, तस्य नर्तितव्यशेषं युष्माभिः कौमुदीमहोत्सवे नर्तितव्यमिति।" ह्यः खलु आरण्यिकया प्रियसख्या शून्यहृदयया अन्यथैव नर्तितम्। अद्य पुनः वासवदत्तायाः वेषं कृत्वा तथा नर्तिते देव्याः कोपो भविष्यति। तत् कुत्र तावत् तां प्रेक्ष्य उपालप्स्ये । एषा आरण्यिका आत्मनैव

---

**तत इत्यादि** ॥ मनोरमा वासवदत्ताचेटी । हञ्जे इति चेट्याः सम्बोधनम् । "हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति।" इत्यमरः । साङ्कृत्यायनी तन्नाम्नी काचन देव्याः परिव्राजिका विविधविचित्रग्रन्थनिर्माणनिपुणा विदुषी । आर्यपुत्रस्य मद्भर्तुः, ह्यः पूर्वेद्युः, शून्यहृदयया अन्यसङ्क्रान्तमनस्कया प्रकृतनाट्ये अदत्तहृदयावधानया । भूमिका वेषः । उपालप्स्ये निन्दिष्यामि । मन्त्रयन्ती चिन्त-

अप्पणा एव्व किंवि मन्तअन्ती दिग्घिआतीरे कअलीघरं पविसदि । ता गुम्मन्तरिदा भविअ सुणिस्सं दाव से वीसद्धजप्पिदाणि ।

( ततः प्रविशत्यारण्यिका । )

**आर**—( कामावस्थां नाटयन्ती । निश्वस्य । ) [1]हिअअ दुल्लहजणं पत्थअन्तो तुमं कीस मं दुक्खिदं करेसि ।

**मनोरमा**— [2]तं एदं एदस्स सुण्णहिअअत्तणस्स कारणं । किं उण एसा पत्थेदि । अवहिदा दाव सुणिस्सं ।

**आर**—( सास्रम् ) [3]तह णाम सोम्मदंसणो भविअ महाराओ कहं एव्वं मं संदावेदि ! अच्चरिअं अच्चरिअं । ( निश्वस्य ) अहवा मह एव्व अभाअहेअदा ण उण महाराअस्स दोसो ।

---

किमपि मन्त्रयन्ती दीर्घिकातीरे कदलीगृहं प्रविशति । तत् गुल्मान्तरिता भूत्वा श्रोष्यामि तावदस्याः विस्रब्धजल्पितानि ।

१. हृदय दुर्लभजनं प्रार्थयत् त्वं कस्मात् मां दुःखितां करोषि ।

२. तदेतत् एतस्याः शून्यहृदयत्वस्य कारणम् । किं पुनरेषा प्रार्थयते । अवहिता तावत् श्रोष्यामि ।

३. तथा नाम सौम्यदर्शनः भूत्वा महाराजः कथमेवं मां सन्तापयति ! आश्चर्यं आश्चर्यम् । अथवा ममैव भागधेयता न पुनः महाराजस्य दोषः ।

---

यन्ती । दीर्घिका तटाकः । गुल्मः लतादिपिहितो गहनप्रदेशः । विस्रब्धजल्पितानि स्वच्छन्दभाषणानि ॥

**तदित्यादि** ॥ प्रार्थयते अभिलषति । अवहिता सावधाना । अभागधेयता

**मनो**—( सबाष्पम् ) [1]कहं महाराओ एव्व से पत्थणिज्जो । साहु पिअसहि साहु । अहिजादसरिसो दे अहिलासो ।

**आर**—[2]कस्स दाणिं एदं वुत्तन्तं णिवेदिअ सज्झवेअणं विअ दुक्खं करिस्सं । ( विचिन्त्य ) अहवा अत्थि मे हिअअणिव्विसेसा पिअसही मणोरमा । ताए वि एदं लज्जाए ण पारेमि कहिदुं । सव्वहा मरणं वज्जिअ कुदो मे हिअअस्स अण्णा णिव्वुदी ।

**मनो**—[3]हद्धि हद्धि अदिभूमिं गदो से तवस्सिणीए अणुराओ । ता किं दाणिं एत्थ करिस्सं ।

**आर**—( साभिलाषम् ) [4]अअं सो उद्देसो । जस्सिं महुअरेहिं आआसिज्जन्ती ओलम्बिअ महाराएण समस्सासिदह्मि—" मा भीरु भाआहि" त्ति ।

---

१. कथं महाराज एव अस्याः प्रार्थनीयः । साधु प्रियसखि साधु । अभिजात-सदृशः ते अभिलाषः ।

२. कस्य इदानीं एनं वृत्तान्तं निवेद्य सह्यवेदनमिव दुःखं करिष्ये । अथवा अस्ति मे हृदयनिर्विशेषा प्रियसखी मनोरमा । तस्या अपि एतं लज्जया न पारयामि कथयितुम् । सर्वथा मरणं वर्जयित्वा कुतः मे हृदयस्य अन्या निर्वृतिः ।

३. हा धिक् हा धिक् अतिभूमिं गतोऽस्याः तपस्विन्याः अनुरागः । तत् किमिदानीमत्र करिष्यामि ।

४. अयं स उद्देशः । यस्मिन् मधुकरैः आयास्यमाना अवलम्ब्य महाराजेन समाश्वासितास्मि—" मा भीरु भैषीः " इति ।

---

दौर्भाग्यम् । अभिलाषः मनोरथः । सह्या सेढव्या वेदना दुःखं यस्य तत् । निर्विशेषा समाना । न पारयामि न शक्नोमि । निर्वृतिः सुखम् । अतिभूमिं परां काष्ठाम् । तपस्विन्याः शोच्यायाः । उद्देशः प्रदेशः । मधुकरैः भ्रमरैः । आयास्य-

**मनो**—(सहर्षम्) [1]कहं एसा वि दिट्ठा महाराएण । सव्वहा अत्थि से जीविदस्स उवाओ । ता जाव उवसप्पिअ समस्सासेमि णं । (सहसोपसृत्य) जुत्तं णाम किं हिअअस्स वि लज्जिदुं ।

**आर**—(लज्जां नाटयन्ती । आत्मगतम्) [2]हद्धि हद्धि । सव्वं सुदं एदाए । ता एत्थ जुत्तं एव्व पआसइदुं । (प्रकाशम् । हस्ते गृहीत्वा) पिअसहि मा कुप्प मा कुप्प । लज्जा एव्व एत्थ अवरज्झदि ।

**मनो**—(सहर्षम्) [3]सहि, अलं संकाए । एदं मे आचक्ख । सच्चं एव्व तुमं महाराएण दिट्ठा, ण वेत्ति ।

**आर**—(सलज्जमधोमुखी) [4]सुदं एव्व पिअसहीए सव्वं ।

---

१. कथमेषापि दृष्टा महाराजेन । सर्वथा अस्ति अस्याः जीवितस्य उपायः । तद्यावदुपसर्प्य समाश्वासयाम्येनाम् । युक्तं नाम किं हृदयस्यापि लज्जितुम् ।

२. हा धिक् हा धिक् । सर्वं श्रुतं एतया । तदत्र युक्तमेव प्रकाशयितुम् । प्रियसखि मा कुप्य मा कुप्य । लज्जैवात्रापराद्ध्यति ।

३. सखि, अलं शङ्कया । एतन्मे आचक्ष्व । सत्यमेव त्वं महाराजेन दृष्टा, न वेति ।

४. श्रुतमेव प्रियसख्या सर्वम् ।

---

माना पीड्यमाना । समाश्वासिता स्वास्थ्यमापादिता । आत्मगतं अन्यश्रुत्यगोचरं यथा तथा स्वयमेव कथनम् । इदमेव स्वगतशब्देनापि व्यवह्रियते । "अश्राव्यं स्वगतं मतम्" इत्यभियुक्तोक्तेः । प्रकाशं सर्वश्रवणगोचरतया भाषणं, "सर्वश्राव्यं

**मनो**—[1]जं दिट्ठा महाराएण ता अलं सन्दावेण । सो एव्व दाणिं तुह दंसणोवाअपज्जाउलो हविस्सदि ।

**आर**—[2]सहीअणपक्खवादेण मंतेसि । देवीगुणणिअलबद्धे तस्सिं जणे कुदो एदं ।

**मनो**—(विहस्य) [3]हला अपण्डिदे कमलिणीबद्धाणुराओ वि महुअरो मालदिं पेक्खिअ अहिणवरसास्सादलंपडो कुदो तं अणासादिअ ठ्ठिदिं करेदि ।

**आर**—[4]किं एदिणा असंभाविदेण । अहिअं क्खु सरदादवेण सन्तप्पाइ अज्जवि ण मे अङ्गाइं सन्तावं मुचन्दि ।

**मनो**—[5]अइ लज्जालुए ण जुत्तं एदावत्थं गदाए वि दे अप्पा पच्चादिदुं ।

---

१. यद्दृष्टा महाराजेन तदलं सन्तापेन । स एव इदानीं तव दर्शनोपायपर्याकुलो भविष्यति ।

२. सखीजनपक्षपातेन मन्त्रयसे । देवीगुणनिगलबद्धे तस्मिन् जने कुत एतत् ।

३. हला अपण्डिते कमलिनीबद्धानुरागोऽपि मधुकरः मालतीं प्रेक्ष्य अभिनवरसास्वादलम्पटः कुतस्तामनासाद्य स्थितिं करोति ।

४. किमनेनासम्भावितेन । अधिकं खलु शरदातपेन सन्तप्तानि अद्यापि न मे अङ्गानि सन्तापं मुञ्चन्ति ।

५. अयि, लज्जालो न युक्तं एतदवस्थां गताया अपि ते आत्मा प्रच्छादयितुम् ।

---

प्रकाशं स्यात्'' इत्युक्तेः । देव्याः वासवदत्तायाः गुण एव निगळः श्रृङ्खला तेन बद्धे तस्मिन् जने महाराजे । मालतीं जातीकुसुमम् । लम्पटः बद्धादरः । अनासाद्य अप्राप्य । आतपेन द्योतेन । प्रच्छादयितुं स्थगयितुम् । अवनमयति न्यञ्चयति ।

**आर**—( मुखमवनमयति । )

**मनो**—अइ अविस्सम्भसीले—[1]

**सासणिहा णिग्गमिओ दिअहं रत्तिं वि तुज्झ अणुराओ।**
**अविरअपडंतमम्महसरसअहुंकारसद्दो व्व ॥**

( स्वगतम् ) अहवा ण हु अअं कालो उवालम्भणाणं । ता जाव णलिणीपत्ताइं से हिअए दाइस्सं । ( उत्थाय, दीर्घिकाया नलिनीपत्राणि गृहीत्वा, आरण्यिकाहृदये ददाति ) सहि, समस्ससिहि समस्ससिहि ।

( ततः प्रविशति विदूषकः । )

**विदू**—अदिमहंतो क्खु पिअवअस्सस्स आरण्णिआए उवरिं अणुराओ । जेण परिच्चत्तसव्वराअकज्जो ताए एव्व दंसणोवाअं चिंतअन्तो अप्पाणं विणोदेदि । ( विचिन्त्य ) ता कहिं दाणिं तं पेक्खे । अहवा तहिं वि दाव दिग्घिआए अण्णेसामि । ( इति परिक्रामति । )[2]

---

१. अयि अविस्रम्भशीले—

**श्वासनिभान्निर्गतः दिवसं रात्रिमपि तवानुरागः ।**
**अविरतपतन्मन्मथशरशतहुङ्कारशब्द इव ॥**

अथवा न खल्वयं काल उपालम्भनानाम् । तद्यावत् नलिनीपत्राणि अस्याः हृदये दास्यामि । सखि, समाश्वसिहि समाश्वसिहि ।

२. अतिमहान् खलु प्रियवयस्यस्य आरण्यिकाया उपरि अनुरागः। येन परित्यक्तसर्वराजकार्यः तस्या एव दर्शनोपायं चिन्तयन् आत्मानं विनोदयति । तत् कुत्रेदानीं तां प्रेक्षे । अथवा तत्रैव तावत् दीर्घिकायामन्वेषयामि ।

---

अविस्रम्भशीले अविश्वासशीले । निश्वासनिभेन निश्वासव्याजेन । शराः बाणाः । उपालम्भनानां निन्दावचनानाम् ॥

**अतिमहानित्यादि** ॥ विनोदयति सद्यवेदनं करोति । अन्वेषयामि वि-

**मनो**—(आकर्ण्य) [1]पदसद्दो विअ सुणीअदि । ता कदलीगुम्मन्तरिआ भविअ पेक्खह्म दाव को एसो त्ति ।

(उभे तथा कृत्वा पश्यतः ।)

**आर**—[2]कहं सो एव्व महाराअस्स पासपरिवट्टी बह्मणो ।

**मनो**—(विलोक्य) [3]कहं वसन्दओ । (सहर्षम्, स्वगतम्) अवि णाम तह हवे ।

**विदू**—(दिशोऽवलोक्य ।) [4]किं दाणिं आरण्णिआ सच्चं एव्व आरण्णिआ संवुत्ता ।

**मनो**—(सस्मितम् ।) [5]सहि राअवअस्सो क्खु बह्मणो तुमं उद्देसिअ मंतेदि । ता दाव अवहिदा सुणह्म ।

**आर**—(सस्पृहं, सलज्जं च शृणोति ।)

**विदू**—(सोद्वेगम् ।) [6]गुरुमअणसंदावणीसहसरीरस्स पिअवअस्सस्स वअणेण देवीए वासवदत्ताए पेम्मावदीए अण्णाणं वि देवीणं

---

१. पदशब्द इव श्रूयते । तत् कदलीगुल्मान्तरिते भूत्वा प्रेक्षावहे तावत् क एष इति ।

२. कथं स एव महाराजस्य पार्श्वपरिवर्ती ब्राह्मणः ।

३. कथं वसन्तकः । अपि नाम तथा भवेत् ।

४. किमिदानीं आरण्यिका सत्यमेव आरण्यिका संवृत्ता ।

५. सखि, राजवयस्यः खलु ब्राह्मणः त्वामुद्दिश्य मन्त्रयते । तत्तावत् अवहिते शृणुवः ।

६. गुरुमदनसन्तापनिस्सहशरीरस्य प्रियवयस्यस्य वचनेन देव्याः वासवदत्तायाः प्रेमावत्याः अन्यानामपि देवीनां भवनानि अन्विष्यता सा मया न दृष्टा । ततः

---

खिन्नोऽस्मि । वसन्तकः इति विदूषकस्य नाम । अवहिते सावधाने । उद्वेगः व्यथा । गुरुः यः मदनसन्तापः मारज्वरः तेन निस्सहं शरीरं यस्य तस्य । मदनानल-

भवणाइं अण्णेसंतेण सा मए ण दिट्ठा । तदो इदं वि दाव पेक्खिस्सं त्ति आअदो म्हि । ता जाव इह वि णत्थि । किं दाणिं करिस्सं ।

**मनो**—सुदं[1] पिअसहीए ।

**विदू**—(विचिन्त्य ।) अहवा[2] भणिदो एव्व अहं वअस्सेण—"जइ तं अण्णेसंतो ण पेक्खसि ताहे दाव ताए करअलप्परिससुहसीअलाइं णलिणीपत्ताइं गेण्हिअ आअच्छ"त्ति । ता कहं एदाइ जाणिदव्वाइ ।

**मनो**—एस[3] मे अवसरो । (उपसृत्य विदूषकं हस्ते गृहीत्वा ।) वसन्तअ एहि अहं जाणावेमि ।

**विदू**—(सभयम् ।) कस्स[4] तुमं जाणावेसि । किं देवीए । ण क्खु मए किंवि मन्तिदं ।

**मनो**—वसन्तअ[5] अलं संकाए । जारिसी आरण्णिआए किदे अत्तणो पिअवअस्सस्स अवत्था वण्णिदा, तदो वि दिउणदरं उण

---

इदमपि तावत् प्रेक्षिष्ये इति आगतोऽस्मि । तद्यावदिहापि नास्ति । किमिदानीं करिष्यामि ।

१. श्रुतं प्रियसख्या ।

२. अथवा भणित एवाहं वयस्येन—"यदि तामन्वेषयन्न पश्यसि तर्हि तावत् तस्याः करतलस्पर्शसुखशीतलानि नलिनीपत्राणि गृहीत्वा आगच्छ" इति । तत् कथं एतानि ज्ञातव्यानि ।

३. एष मे अवसरः । वसन्तक एहि अहं ज्ञापयामि ।

४. कस्य त्वं ज्ञापयसि । किं देव्याः । न खलु मया किमपि मन्त्रितम् ।

५. वसन्तक, अलं शङ्कया । यादृशी आरण्यिकायाः कृते आत्मनः प्रियवयस्य-

भट्टिणो वि किदे मह पिअसहीए अवत्था । ता पेक्ख पेक्ख। (उपसृत्य आरण्यिकां दर्शयति ।)

**विदू**—(दृष्ट्वा, स्वगतम् ।) [1]सफलो मे परिस्समो । सोत्थि भोदीए

**आर**—(सलज्जं कमलिनीपत्राण्यपनीयोत्तिष्ठति । )

**मनो**—(सस्मितम् ।) [2]अय्य वसन्तअ, तुह दंसणेण एव्व ओगदो पिअसहीए संदावो । जेण सअं एव्व णलिणीपत्ताइं अवणेदि । ता अणुगेण्हादु अय्यो इमाइं ।

**आर**—(सावेगम् ।) [3]अयि परिहाससीले, किं मं लज्जावेसि । (किञ्चित्पराङ्मुखी तिष्ठति ।)

**विदू**—(सविषादम् ।) [4]चिट्ठंदु दाव णलिणीपत्ताइं । अदिलज्जालुआ दे पिअसही । ता कहं एदाणं समाअमो हविस्सदि ।

---

स्य अवस्था वर्णिता, ततोऽपि द्विगुणतरं पुनः भर्तुरपि कृते मम प्रियसख्या अवस्था । तत् प्रेक्षस्व प्रेक्षस्व ।

१. सफलः मे परिश्रमः । स्वस्ति भवत्याः ।

२. आर्य वसन्तक, तव दर्शनेनैव अपगतः प्रियसख्याः सन्तापः । येन स्वयमेव नलिनीपत्राणि अपनयति । तदनुगृह्णातु आर्य इमानि ।

३. अयि परिहासशीले, किं मां लज्जापयासि ।

४. तिष्ठन्तु तावत् नलिनीपत्राणि । अतिलज्जालुः ते प्रियसखी । तत् कथमेतयोः समागमो भविष्यति ।

---

दुर्वहशरीरस्थितेरिति यावत् । परिश्रमः आयासः । अपगतः नष्टः । नेपथ्यग्रहणं वेषपरिग्रहः ॥

**मनो**—(क्षणं विचिन्त्य, सहर्षम् ।) [1]वसन्तअ एव्वं विअ । (कर्णे कथयति ।)

**विदू**—[2]साहु पिअसहि साहु । (अपवार्य ।) जाव एव्व तुह्मे णेवच्छग्गहणं करेथ, दाव एव्व अहं वि पिअवअस्सं गेण्हिअ आअच्छामि (इति निष्क्रान्तः ।)

**मनो**—[3]अदिकोवणे उट्ठेहि उट्ठेहि । णच्चिदव्वं क्खु अह्मेहिं तस्स एव्व णाडअस्स णच्चिदव्वसेसं । ता एहि पेक्खाघरं एव्व गच्छह्म । (परिक्रम्यावलोक्य ।) एदं पेक्खाघरं । जाव एहि पविसह्मि । (प्रविष्टकेनावलोक्य ।) साहु एदं सज्जीकिदं देवीए आअंतव्वं ।

(ततः प्रविशति देवी सांकृत्यायनी विभवतश्च परिवारः ।)

**वास**—[4]भअवदि अहो दे कवित्तणं । जेण एदं वुत्तंतं णाडओवणिबद्धं साणुहवं वि अह्माणं अय्यउत्तचरिदं, अदिट्ठपुव्वं विअ दीसंतं अदिअदरं कोदूहलं वड्ढावेदि ।

---

१. वसन्तक एवमिव ।

२. साधु प्रियसखि साधु । यावदेव यूयं नेपथ्यग्रहणं कुरुथ, तावदेवाहमपि प्रियवयस्यं गृहीत्वा आगच्छामि ।

३. अतिकोपने उत्तिष्ठ उत्तिष्ठ । नर्तितव्यं खलु अस्माभिः तस्यैव नाटकस्य नर्तितव्यशेषम् । तदेहि प्रेक्षागृहमेव गच्छावः । एतत् प्रेक्षागृहम् । यावदेहि प्रविशावः । साध्वेतत् सज्जीकृतं देव्या आगन्तव्यम् ।

४. भगवति अहो ते कवित्वम् ! येनैतं वृत्तान्तं नाटकोपनिबद्धं सानुभवमपि अस्माकं आर्यपुत्रचरित्रं, अदृष्टपूर्वमिव दृश्यमानं अधिकतरं कौतूहलं वर्धयति ।

---

भगवतीत्यादि॥ अहो इत्याश्चर्ये । कौतूहलं कुतुकम् । वर्धयति बृंहयति ॥

**सांकृ**—आयुष्मति! आश्रयगुण एवायमीदृशः। यदसारमपि काव्यं शृण्वतां श्रवणसुखमुत्पादयतीति। पश्य—

**प्रायो यत्किञ्चिदपि प्राप्नोत्युत्कर्षमाश्रयान्महतः।**
**मत्तेभकुम्भतटगतमेति हि शृङ्गारतां भस्म॥**

**वास**—(सस्मितम्।) [1]भअवदि सव्वस्स वल्लहो जामादोत्ति जाणीअदि एव्व। किं एदिणा कहाणुबन्धेण। वरं एव्व तं णच्चिदं दट्ठुं।

**सांकृ**—एवं। इन्दीवरिके प्रेक्षागृहमादेशय।

**चेटी**—[2]एदु एदु भट्टिणी।

---

१. भगवति सर्वस्य वल्लभो जामातेति ज्ञायत एव। किमनेन कथानुबन्धेन। वरमेव तन्नृत्यं द्रष्टुम्।

२. एतु एतु भट्टिनी।

---

**प्राय इति**॥ यत्किञ्चिदपि असारतरमपि वस्तु, (कर्तृ) महतः उत्कृष्टवस्तुनः, आश्रयात् आलम्बनात्, (हेतोः) प्रायः बाहुळ्येन, उत्कर्षं श्रैष्ठ्यं, प्राप्नोति अधिगच्छति। अत्र दृष्टान्तमाह—मत्तेभेत्यादिना। भस्म असारतमत्वेन प्रसिद्धा भूतिरपि, मत्तेभस्य गन्धद्विपस्य कुम्भतटं मस्तकस्थलं गतं प्राप्तं सत्, शृङ्गारतां शृङ्गारं नाम गजमण्डनसाधनं रञ्जनद्रव्यं "शृङ्गारो गजमण्डने। सुरते रतिंभेदे च शृङ्गारं नागसम्भवम्' इति हैमः। तस्य भावः तत्ता तां, एति हि प्राप्नोति हि। पथ्यार्या वृत्तम्॥

**भगवतीत्यादि**॥ सर्वस्य वल्लभः प्रियः जामाता दुहितुः पतिः। महाराज इत्यर्थः। स्वस्य भगवतीपुत्रीत्वं औपचारिकमभ्युपगम्य स्वभर्तारं भगवतीजामातृ-

(सर्वाः परिक्रामन्ति ।)

**सांकृ**—(आलोक्य ।) अहो प्रेक्षणीयता प्रेक्षागृहस्य—

आभाति रत्नशतशोभितशातकुम्भ-
स्तम्भावसक्तपृथुमौक्तिकदामरम्यम् ।
अध्यासितं युवतिभिर्विजिताप्सरोभिः
प्रेक्षागृहं सुरविमानसमानमेतत् ॥

**मनोरमारण्यिके**—(उपसृत्य ।)[1]जेदु जेदु भट्टिणी ।

**वास**—[2]अदिक्कंदा क्खु संझा । ता गच्छह । लहुं गेण्हध णेवच्छं ।

**उभे**—[3]जं आणवेदि भट्टिणी (इति प्रस्थिते ।)

**वास**—[4]आरण्णिए एदेहिं एव्व मदङ्गपिणद्धेहिं आहरणेहिं णेवच्छभूमिं गदुअ अप्पाणं पसाधेहि । (आभरणान्यङ्गादवतार्यार्पयति ।) मणो-

---

१. जयतु जयतु भट्टिनी ।

२. अतिक्रान्ता खलु सन्ध्या । तत् गच्छथ । लघु गृह्णीत नैपथ्यम् ।

३. यदाज्ञापयति भट्टिनी ।

४. आरण्यिके एतैरेव मदङ्गपिनद्धैः आभरणैः नेपथ्यभूमिं गत्वा आत्मानं

---

त्वेन व्यपदिष्टवतीति भावः । प्रेक्षणीयता दर्शनीयता सौन्दर्यमिति यावत् । प्रेक्षागृहं नाटकशाला ॥

**आभातीति** ॥ रत्नानां शतैः अनेकरत्नैः शोभिताः प्रकाशमानाः ये शातकुम्भस्तम्भाः सुवर्णस्थूणाः तेषु अवसक्तानि बद्धानि यानि पृथुमौक्तिकदामानि गुरुतरमुक्तासराः तैः रम्यं मनोज्ञम् । विजिताः सौन्दर्येण पराजिताः अप्सरसः देवगणिकाः याभिस्ताः ताभिः युवतिभिः तरुणीभिः अध्यासितं अधिष्ठितं, एतत् इदं पुरोवर्ति, प्रेक्षागृहं नाट्यशाला, सुरविमानेन देवयानेन समानं सदृशं, आभाति प्रकाशते । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥

**अतिक्रान्तेत्यादि** ॥ सन्ध्या सायंसन्ध्या, पिनद्धैः संश्लिष्टैः, नेपथ्यभूमिः

रमे तुमं वि णलगिरिग्गहणपरितुट्ठेण तादेण अय्यवुत्तस्स दिण्णाइं आहरणाइं इन्दीवरिआसआसादो गेण्हिअ, णेवच्छभूमिं गदुअ, अप्पाणं मण्डेहि । जेण सुसदिसी दीससि महाराअस्स ।

**मनो**—(इन्दीवरिकासकाशादाभरणानि गृहीत्वा, सहारण्यिकया निष्क्रान्ता।)

**इन्दी**—[1]इदं आसणं उवविसदु भट्टिणी ।

**वास**—(आसनं निर्दिश्य ।) [2]उवविसदु अ भअवदी ।

(उभे आसनग्रहणं नाटयतः ।)

(ततः प्रविशति गृहीतनेपथ्यः कञ्चुकी ।)

**कञ्चु**—

**अन्तःपुराणां विहितव्यवस्थः**
**पदे पदेऽहं स्खलितानि रक्षन् ।**

---

प्रसाधय । मनोरमे त्वमपि नलगिरिग्रहणपरितुष्टेन तातेन आर्यपुत्रस्य दत्तानि आभरणानि इन्दीवरिकासकाशात् गृहीत्वा, नेपथ्यभूमिं गत्वा, आत्मानं मण्डय । येन सुसदृशी दृश्यसे महाराजस्य ।

१. इदमासनमुपविशतु भट्टिनी ।

२. उपविशतु च भगवती ।

---

वेषपरिग्रहयोग्या यवनिकान्तर्भूमिः। प्रसाधय अलङ्कुरु । अवतार्य अवरोप्य । समर्पयति प्रयच्छति । नलगिरिः तन्नामा कश्चनेन्द्रदत्तः दुर्दान्तः प्रद्योतस्य औपवाह्यो गजः । स च कदाचिन्मत्तः आलानमुत्पाट्य उच्छृङ्खलं चचार । तं चायमुदयनोऽगृह्णादिति श्रूयते । अत एव मेघसन्देशे "अत्रोद्भ्रान्तः किल नलगिरिस्स्तम्भमुत्पाट्य दर्पात्" इति कालिदासोऽपि । सकाशात् समीपात् । मण्डय भूषय । कञ्चुकी अन्तःपुररक्षको वृद्धः ॥

**अन्तःपुराणामिति** ॥ अन्तःपुराणां शुद्धान्तानां विहिता रचिता व्यवस्था येन सः । स्वस्य तत्राधिकृतत्वादिति भावः । पदे पदे एकैकचरणविन्यासेऽपि, स्खलितानि वार्धकनिबन्धनानि स्खालित्यानि, रक्षन् अवशात्सम्भविष्यतः स्खालि-

जरातुरस्सम्प्रति दण्डनीत्या
सर्वं नृपस्यानुकरोमि वृत्तम् ॥

आज्ञापितोऽस्मि विमानिताशेषशत्रुसैन्येन यथार्थनाम्ना महासेनेन "समादिश्यतामन्तःपुरेषु । यथा श्वो वयमुदयनोत्सवमनुभवामः । अतो युष्माभिरुत्सवानुरूपवेषोज्ज्वलेन परिजनेन सह मन्मथोद्यानं गन्तव्यमिति ।"

**सांकृ**—(कञ्चुकिनं निर्दिश्य ।) प्रवृत्ता प्रेक्षा दृश्यताम् ।

**कञ्चु**—तदेतावदेवादेष्टव्यम् । परिजनेन सह गन्तव्यमिति । न वेषोज्ज्वलेनेति । कुतः ।

पादैर्नूपुरिभिः, नितम्बफलकैश्शिञ्जानकाञ्चीगुणैः,
हारापादितकान्तिभिस्स्तनतटैः, केयूरिभिर्बाहुभिः ।

---

स्यात् स्वात्मरक्षणे दत्तावधान इति यावत् । जरया विस्रंसया, आतुरः रुग्णः, अहं दण्डनीत्या आलम्बनयष्ट्या ( उपलक्षितः इति शेषः ) सम्प्रति, सर्वं समग्रं, नृपस्य भूपतेः, वृत्तं चरितं, अनुकरोमि विडम्बयामि । नृपोऽपि पुराणां निजराष्ट्रस्थानां नगरग्रामव्रजादीनां, अन्तः व्यवस्थामापादयेत् । पदे पदे क्षणे क्षणे, कस्मात् शत्रोः कीदृशोऽनर्थस्सम्भविष्यतीति, समालोचयन् अनिष्टादनहितचित्तः स्यात् । किंच, दण्डनीत्या राजन्यकासाधारणशिक्षाधिकारेण, जडानां अविवेकिनां मूर्खाणां वा दमयिता स्यात् । श्लिष्टोपमा । उपजातिवृत्तम् ॥

**आज्ञापित इत्यादि** ॥ विमानिताः परिभूताः । यथार्थनाम्ना अन्वर्थाभिधानेन । श्वः एष्यति वासरे ॥

**पादैरिति** ॥ नूपुरिभिः मञ्जीरसहितैः पादैः चरणतलैः, शिञ्जानाः शब्दायमानाः काञ्चीगुणाः रशनादामानि येषु तानि तादृशैः नितम्बफलकैः अवलग्नप्रदेशैः

कर्णैः कुण्डलिभिः, करैस्सवलयैः, सस्वस्तिकैर्मूर्धजैः
देवीनां परिचारिकापरिजनोऽप्येतेषु संदृश्यते ॥

न खलु किञ्चिदत्रापूर्वमनुष्ठेयम् । केवलं स्वाम्यादेश इति मत्वाहं समादिष्टं तदाज्ञाशेषं राजपुत्र्यै निवेदयामि (इति परिक्रम्यावलोक्य च ।) इयं वासवदत्ता वीणाहस्तया काञ्चनमालयानुगम्यमाना गन्धर्वशालां प्रविष्टा । यावदस्याः कथयामि । (इति परिक्रामति ।)

(ततः प्रविशति गृहीतवासवदत्तानेपथ्या आसनस्था आरण्यिका, वीणाहस्ता काञ्चनमाला च ।)

**आर**—हञ्जे कञ्चणमाले, कीस उण चिराअदि अज्ज वीणाआरिओ ।

**काञ्च**—भट्टिदारिए, दिट्ठो देण एक्को उम्मत्तो । तस्स वअणं सुणिअ तेण भाविदत्थो हसंतो चिट्ठइ ।

---

१. हञ्जे काञ्चनमाले कस्मात् पुनः चिरयते अद्य वीणाचार्यः ।

२. भर्तृदारिके, दृष्टस्तेन एक उन्मत्तः । तस्य वचनं श्रुत्वा तेन भावितार्थः हसन् तिष्ठति ।

---

हारैः मौक्तिकसरैः आपादिता उत्पादिता कान्तिः शोभा येषां ते तादृशैः, स्तनतटैः पयोधरप्रदेशैः, केयूरिभिः साङ्गदैः बाहुभिः भुजमूलैः, कुण्डलिभिः कर्णाभरणयुक्तैः, कर्णैः श्रवणपाशैः, सवलयैः कङ्कणधरैः करैः हस्तैः, स्वस्तिकः शिखाभरणविशेषः तत्सहितैः, मूर्धजैः कुन्तलैः, उपलक्षितः, देवीनां महिष्याः ( पूजायां बहुवचनम् ) परिचारिकापरिजनोऽपि शुश्रूषानिरतः किङ्करजनोऽपि, एतेषु, सन्दृश्यते लक्ष्यते । शार्दूलविक्रीडितं वृत्तम् ॥

**नेत्यादि** ॥ वीणा परिवादिनी हस्ते यस्यास्सा वीणाहस्ता । गन्धर्वशालां सङ्गीतगृहम् । यावत्कथयामि कथयिष्यामि । ( चिरयते विलम्बते । उन्मत्तः

**आर**—(सहस्ततालं विहस्य ।) हञ्जे सुट्ठु एदं भणीअदि "सरिसा सरिसेसु रज्जंति"त्ति ।

**सांकृ**—राजपुत्रि, यादृशमाकारं पश्याम्यस्याः तादृशेनाकारेणावश्यं त्वदीयां भूमिकां संभावयिष्यति ।

**कञ्चु**—(उपसृत्य ।) राजपुत्रि देवस्त्वामाज्ञापयति श्वोऽवश्यमस्माभिर्वीणां वादयन्ती श्रोतव्या । तत्त्वया नवतन्त्रीसज्जया घोषवत्या स्थेयं" इति ।

**आर**—अय्य जइ एव्वं लहु वीणाआरिअं विसज्जेहि ।

**कञ्चु**—एष वत्सराजं प्रेषयामि । (इति निष्क्रान्तः ।)

**आर**—कञ्चणमाले उवणेहि मे घोसवदिं । जाव से तन्दीओ परिक्खेमि ।

**काञ्च**—(वीणामपयति ।)

**आर**—(उत्सङ्गे वीणां कृत्वा सारयति ।)

---

१. हञ्जे सुष्ठु एतत् भण्यते "सदृशाः सदृशेषु रज्यन्ते" इति ।

२. आर्य, यद्येवं लघु वीणाचार्यं विसर्जय ।

३. काञ्चनमाले उपनय मह्यं घोषवतीम् । यावदस्याः तन्त्रीः परीक्षे ।

---

चित्तविभ्रमी । हसन् हासं कुर्वाणः । भूमिकां वेषम् । सम्भावयिष्यति धरिष्यति इत्यर्थः । सज्जया सन्नद्धया, घोषवत्या तन्नाम्न्या वीणया । वीणाचार्यं वत्सराजमित्यर्थः । विसर्जय प्रेषय । परीक्षे सुबद्धाः उत नेति परिशीलयामि । उत्सङ्गे अङ्के । सारयति घट्टयति । बिभेति त्रस्यति । अवकुण्ठितं वस्त्रेण आच्छादितं शरीरं वपुः यस्य सः ॥

(ततः प्रविशति गृहीतवत्सराजनेपथ्या मनोरमा ।)

**मनो**—(स्वगतम् ।)[1] चिरअदि महाराओ । किं ण कहिदं वसंत-एण । अहवा देवीए भाअदि । जइ दाणिं आअच्छे तदो रमणिज्जं भवे ।

(ततः प्रविशति राजा अवकुण्ठितशरीरो विदूषकश्च ।)

**राजा**—

सन्तापं प्रथमं तथा न कुरुते शीतांशुरद्यैव मे
निःश्वासा ग्लपयन्त्यजस्रमधुनैवोष्णास्तथा नाधरम् ।
संप्रत्येव मनो न शून्यमलसान्यङ्गानि नो पूर्ववत्
दुःखं याति मनोरथेषु तनुतां संचिन्त्यमानेष्वपि ॥

वयस्य सत्यमेवोक्तं मनोरमया । यथा—"एषा मम प्रियसखी महाराजस्य देव्या दर्शनपथादपि रक्ष्यते । तदयं समागमोपायः । अद्य रात्रावस्माभिरुदयनचरितं नाम नाटकं देव्याः पुरतो नर्तितव्यम् । तत्रारण्यिका वासवदत्ता भविष्यति । अहमपि वत्सराजः । तच्चरितेनैव

१. चिरयति महाराजः । किं न कथितं वसन्तकेन । अथवा देव्या बिभेति । यदीदानीं आगच्छेत् तदा रमणीयं भवेत् ।

**सन्तापमिति** ॥ शीतांशुः चन्द्रः प्रथमं प्राक् यथा सन्तापं अकरोत् तथा, अद्य इदानीं, मे मम, सन्तापं, न कुरुत एव । अधुनैव अद्यैव, उष्णाः निश्वासाः श्वासानिलाः अजस्रं सन्ततं अधरं तथा न ग्लपयन्ति । सम्प्रत्येव इदानीमेव, पूर्ववत्, मनः स्वान्तं, न शून्यं न निर्विषयम् । अङ्गान्यपि करचरणाद्यवयवा अपि पूर्ववत् नो अलसानि आलस्ययुक्तानि न भवन्ति । कुत इत्यत आह—यतः, मनोरथेषु अभिलषितवस्तुषु, सञ्चिन्त्यमानेष्वपि, दुःखं ( कर्तृ ) तनुतां कार्श्यं, याति प्राप्नोति । शार्दूलविक्रीडितं वृत्तम् ॥

**सत्यमित्यादिना** ॥ स्वयं स्वेनैव मान्तमव्ययमेतत । प्रत्येषि विश्वसिषि

सर्वं शिक्षितव्यं । तदागत्य स्वयमेव स्वां भूमिकां कुर्वाणः समागमोत्सवमनुभवतु" इति ।

**विदू**—जइ[1] मं ण पत्तिआआसि, एसा मणोरमा तुह वेसं धारअन्ती चिट्ठइ । ता उवसप्पिअ सअं एव्व पुच्छ ।

**राजा**—( मनोरमामुपसृत्य ) मनोरमे सत्यमिदं, यद्वसन्तकोऽभिधत्ते ।

**मनो**—भट्टा[2] सच्चं । मण्डअ एदेहिं आहरणेहिं अप्पाणं । ( इत्याभरणान्यङ्गादवतार्य समर्पयति )

**राजा**—( परिदधाति )

**विदू**—एदे[3] क्खु राआणो दासीव्व एव्वं णच्चंति । अहो कज्जस्स गरुअदा ।

**राजा**—( विहस्य ) मूर्ख नैष कालः परिहासस्य । निभृतेन चित्रशालां प्रविश्य मनोरमया सहास्मन्नृत्तं पश्यता स्थीयताम् ।

**विदू**—( तथा करोति )

**आर**—कञ्चणमाले[4] चिट्ठदु वीणा । पुच्छिस्सं दाव किंवि ।

**राजा**—शृणोमि तावत् । कतमोऽयं उद्देशो वर्तत इति ।

---

१. यदि मां न प्रत्येषि । एषा मनोरमा तव वेषं धारयन्ती तिष्ठति । तदुपसर्प्य स्वयमेव पृच्छ ।

२. भर्तः सत्यम् । मण्डय एतैराभरणैरात्मानम् ।

३. एते खलु राजानः दास्य इवैवं नर्त्यन्ते । अहो कार्यस्य गुरुकता ।

४. काञ्चनमाले, तिष्ठतु वीणा । पृच्छामि तावत् किमपि ।

---

भिधत्ते कथयति । मण्डय भूषय । परिदधाति स्वदेहे आमुञ्चति । दास्य इव गणिका इव, नर्त्यन्ते नर्तनभाजः क्रियन्ते । निभृतेन गूढं यथा तथा, उद्देशः सन्दर्भः।

( इत्यवहितः शृणोति )

**काञ्च**—पुंच्छदु भट्टिदारिआ[१]

**आर**—सेच्चं एव्व तादो एव्वं मंतेदि । जह "जइ वीणं वाद-अंतो अवहरदि मं वच्छराओ, अवस्सं मुञ्चेमि" त्ति ।[२]

**राजा**—( प्रविश्य पटाक्षेपेण, सहर्षं वस्त्रान्ते ग्रन्थिं बध्नाति) एवमेतत् कः सन्देहः ।

**सपरिजनं प्रद्योतं विस्मयमुपनीय वादयन् वीणां ।**
**वासवदत्ताहरणं न चिरादेवेति पश्यामि ॥**

यतस्सुसंविहितं सर्वं यौगन्धरायणेन।

**वास**—( सहसोत्थाय ) जेदु अज्जउत्तो ।[३]

**राजा**—( स्वगतम् ) कथं प्रत्यभिज्ञातोऽस्मि देव्या ।

**साङ्कृ**—अलमलं संभ्रमेण । प्रेक्षणीयकमेतत् ।

---

१. पृच्छतु भर्तृदारिका ।

२. सत्यमेव तात एवं मन्त्रयते । यथा "यदि वीणां वादयन् अपहरति मां वत्सराजः, अवश्यं मुञ्चामी"ति ।

३. जयतु आर्यपुत्रः ।

---

पटाक्षेपेण यवनिकापसारणेन । वस्त्रान्ते वसनदशायां, ग्रन्थिं निश्चयसूचकं नहनम् ॥

**सपरिजनमिति** ॥ अहं वीणां घोषवतीं, वादयन् सन्, सपरिजनं सपरिवारं, प्रद्योतं चण्डमहासेनं राजानं, विस्मयं आश्चर्यं उपनीय प्रापय्य आनन्दयित्वेत्यर्थः । वासवदत्तायाः हरणं आवर्जनं न चिरादेव समीपकाल एव भवितेति, पश्यामि अवगच्छामि । पथ्यार्या वृत्तम् ॥

**सुसंविहितमित्यादि** ॥ यौगन्धरायण इति उदयनामात्यस्य नाम ॥

**राजा**—( सहर्षमात्मगतम् ) इदानीमुच्छ्वसितोऽस्मि ।

**वास**—( सविलक्षस्मितमुपविश्य ) [1]कहं मणोरमा क्खु एसा । मए उण जाणिदं अय्यवुत्तो एसोत्ति । साहु मणोरमे साहु । सोहणं णच्चिदं ।

**साङ्कृ**—राजपुत्रि, स्थान एव कारिता भ्रान्तिर्मनोरमया । पश्य—

**रूपं तन्नयनोत्सवास्पदमिदं, वेषस्स एवोज्ज्वलः,**
**सा मत्तद्विरदोचिता गतिरियं, तत्सत्वमत्यूर्जितम् ।**
**लीला सैव, स एव सान्द्रजलदह्रादानुकारी स्वनः**
**साक्षाद्दर्शित एष नः कुशलया वत्सेश एवानया ॥**

**वास**—[2]हञ्जे इन्दीवरिए, बद्धेण अय्यवुत्तेण अहं वीणं सिक्खाविदा । ता से करेहि णीलुप्पलदामएण णिअलं । ( इति शिरसोऽपनीय नीलोत्पलदामार्पयति )

---

१. कथं मनोरमा खल्वेषा । मया पुनः ज्ञातं आर्यपुत्र एष इति । साधु मनोरमे साधु । शोभनं नर्तितम्

२. हञ्जे इन्दीवरिके बद्धेन आर्यपुत्रेणाहं वीणां शिक्षिता । तदस्य कुरु नीलोत्पलदाम्ना निगळम् ।

---

**रूपमिति** ॥ नयनोत्सवस्य नेत्रानन्दस्य आस्पदं आधारभूतं, इदं अद्याद्वक्ष्यमाणं, रूपं सौन्दर्यं, तत् वत्सराजस्य यत् तदेव । उज्ज्वलः दीप्रः, वेषः आकल्पोऽपि, स एव तादृश एव । इयं प्रत्यक्षं अनुभूयमाना, मत्तद्विरदोचिता समदगजराजसमुचिता, गतिः गमनमपि, सा सैव । अत्यूर्जितं बलवत्तरं, सत्वं पौरुषं गाम्भीर्यं वा, तदेव । लीला विलासोऽपि, सैव । सान्द्रः गम्भीरः यः जलदह्रादः मेघध्वनिः तदनुकारी तत्सदृशः, एषः स्वरः कण्ठध्वनिरपि, स एव । किं बहुना भाषितेन । कुशलया समर्थया, अनया प्रत्यक्ष्यमाणया मनोरमया, नः अस्माकं, स एषः वत्स एव महाराजः उदयन एव, साक्षात् प्रत्यक्षं, दर्शित इव । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

**हञ्जे इत्यादि** ॥ बद्धेन निगलबद्धेन, आर्यपुत्रेण नाथेन, शिक्षिता अद्ध्यापिता । नीलोत्पलदाम्ना इन्दीवरस्रजा, निगलं शृङ्खलाबन्धम् । अर्पयति

**इन्दी**—( तथा कृत्वा, पुनस्तथैवोपविशति )

**आर**—कंचणमाले[1], कहेहि कहेहि । णं सच्चं एव्व इदं मंतेदि तादो । जइ वीणं वादअंतो अवहरेदि मं वत्सराओ, तदो अवस्सं बन्धणादो मुंचेमित्ति ।

**काञ्चन**—भट्टिदारिए[2], सच्चं एव्व तह करेहि, जह वच्चराअस्स अवस्सं बहुमदा होहिसि ।

**राजा**—निष्पादितमेव काञ्चनमालया, यदस्माभिरालपितन्यम् ।

**आर**—जइ[3] एव्वं ता आदरेण वादइस्सं । ( गायन्ती वादयति )

**घणबन्धणसंरुद्धं गअणं दट्ठूण माणसं णेदुं ।**
**अहिलसइ राअहंसो दइअं घेत्तूण अप्पणो वसइं ॥**

**विदू**—( निद्रां नाटयति )

---

१. काञ्चनमाले, कथय कथय । ननु सत्यमेव इदं मन्त्रयते तातः । यदि वीणां वादयन्नपहरति मां वत्सराजः, तदवश्यं बन्धनात् मुञ्चामीति ।

२. भर्तृदारिके, सत्यमेव तथा कुरु । यथा वत्सराजस्य बहुमता भविष्यसि ।

३. यद्येवं तर्ह्यादरेण वादयिष्ये—

घनबन्धनसंरुद्धं गगनं दृष्ट्वा मानसं नेतुम् ।
अभिलषति राजहंसः दयितां गृहीत्वा आत्मनो वसतिम् ।

---

प्रयच्छति । मन्त्रयते निभृतं चिन्तयति । बन्धनात् कारागृहात् । भर्तृदारिके राजपुत्रि ॥

**घनेति** ॥ राजहंसः मराळयुवा, घनानां मेघानां बन्धनेन सङ्घातेन, संरुद्धं आक्रान्तं, गगनं नभोऽङ्गणं, दृष्ट्वा आलोक्य, दयितां वल्लभां हंसीं, गृहीत्वा, आत्मनः स्वस्य, वसतिं निवासस्थानभूतं, मानसं तदाख्यं सरः, नेतुं प्रापयितुं, अभिलषति । गीतिः ॥

**मनो**—( हस्तेन चालयन्ती ) वसन्तअ, पेक्ख पक्ख मे पिअसही णच्चइ ।

**विदू**—( सरोषं ) दासीए सुदे तुमं वि ण देसि मे सुविदुं । मम जदो पहुदि पिअवअस्सेण आरण्णिआ दिट्ठा, तदो पहुदि तेण सह मए दिवारत्तं णिद्दा ण लद्धा । ता णिक्कमिअ सुविस्सं । ( इति निष्क्रम्य शेते । )

**आर**—( पुनर्गायति )

**अहिणवराअक्खित्ता महुअरिआ वामएण कामेण ।**
**उत्तम्मइ पत्थअंती दट्ठुं पिअदंसणं दइअं ॥**

---

१. वसन्तक, प्रेक्षस्व प्रेक्षस्व । मे प्रियसखी नृत्यति ।

२. दास्यास्सुते त्वमपि न ददासि मे स्वपितुम् । मम यतः प्रभृति प्रियवयस्येन आरण्यिका दृष्टा, ततः प्रभृति तेन सह मया दिवारात्रं निद्रा न लब्धा तत् निष्क्रम्य स्वप्स्यामि ।

३. अभिनवरागक्षिप्ता मधुकरिका वामेन कामेन ।
उत्ताम्यति प्रार्थयन्ती द्रष्टुं प्रियदर्शनं दयितम् ।

---

**वसन्तकेत्यादि** ॥ दास्याः सुते उपालम्भवचनमेतत् । निद्रां स्वापं, सेवितुं अनुभवितुं, न ददासि अवकाशं इति शेषः । यतःप्रभृति यत आरभ्य, निष्क्रम्य बहिर्गत्वा । स्वप्स्यामि निद्रां अनुभविष्यामि ॥

**अभिनवेति** ॥ अभिनवेन नूत्नेन रागेण अनुरागेण क्षिप्ता अपहृता, मधुकरिका भ्रमरी, वामेन विरुद्धेन, झटिति समीहितदयितसमागमासम्पादनादस्य वामतेति भावः । कामेन मदनेन (हेतुना) प्रियदर्शनं नयनानन्दकररूपं, दयितं वल्लभं, द्रष्टुं अद्धयक्षितुं, प्रार्थयन्ती अभिलषन्ती, उत्ताम्यति ग्लायति । अप्रस्तुतप्रशंसालङ्कारः । पथ्यार्यावृत्तम् ॥

**राजा**—( श्रुत्वा सहसोपसृत्य ) साधु राजपुत्रि साधु । अहो गीतमहो वादित्रम् । तथाहि—

**वृत्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना**
**विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधायं लयः ।**
**गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि सम्पादिताः**
**तत्त्वौघानुगताश्च वाद्यविधयस्सम्यक् त्रयो दर्शिताः ॥**

---

**साध्वित्यादि** ॥ अहो इत्याश्चर्ये । वादित्रं नृत्तगीतवाद्यनाट्यात्मकं चतुर्विधं वाद्यम् ॥

**वृत्तिरिति** ॥ अत्र वृत्तिर्नाम गुणप्रधानत्वरूपा गीतवाद्ययोर्व्यवहृतिः । सा च त्रिविधा । यत्र वाद्यप्रधानत्वं गीतस्य गुणता सा चित्रावृत्तिः । यत्रोभयोस्समभावः सा वृत्तिवृत्तिः । यत्र गीतप्रधानता वाद्यस्य गुणता सा दक्षिणा वृत्तिः । इति । अत्र वृत्तिप्रसङ्गे द्रुतं मध्यं विलम्बितमिति त्रयो लयाः । समा, स्रोतोगता, गोपुच्छेति, तिस्रो यतयः । ओघं अनुगतं तत्वं इति त्रीणि वाद्यानि च भवन्ति । एतेषां नियमनं चैवम् । चित्रवृत्त्यां लयो द्रुतं यतिस्समा वाद्यमोघमिति । वृत्तिवृत्त्यां लयो मद्ध्यं यतिस्स्रोतोगता वाद्यमनुगतमिति । दक्षिणवृत्त्यां लयो विलम्बितं यतिर्गोपुच्छा वाद्यं तत्वमिति च । तस्मात् द्रुतलयसमयत्योघवाद्यपरिच्छिन्ना चित्रैका, मध्यलयस्रोतोयत्यनुगतवाद्यपरिच्छिन्ना वृत्तिः द्वितीया । विलम्बितलयगोपुच्छयतितत्ववाद्यपरिच्छिन्ना दक्षिणा तृतीयेति तिस्रो वृत्तयः । किञ्च धातवो नाम स्वरभेदाः प्रहारविशेषात्समुद्भवन्ति । ते च विस्तारकरणाविद्धव्यञ्जनभेदेन चतुर्विधाः । एतेषां वृत्तिसमाश्रितत्वस्य सङ्गीतशास्त्रज्ञैरभ्युपगतत्वात् वृत्तीनां च प्रत्येकं चातुर्विद्ध्यं सिद्ध्यति । प्रकृते तु व्यञ्जनधात्वाश्रिता एव पूर्वोक्तास्तिस्रो वृत्तय इति ज्ञेयम् । व्यञ्जनञ्च पुष्पादिभेदेन दशविधभेदात् त्रिंशद्वृत्तयः सम्भवन्तीति सिद्धम् । अत्रान्वयस्तु । अमुना दशविधेनापि व्यञ्जनधातुना वृत्तिर्लब्धा । अयं द्रुतमध्यलम्बितपरिच्छिन्नो लयो विस्पष्टः । गोपुच्छप्रमुखास्तिस्रोऽपि यतयः क्रमेण सम्पादिताः । तत्वौघानुगताः त्रयो वाद्यविधयश्च सम्यग्दर्शिताः इति । पूर्वमेव गायन्ती वादयतीत्युक्तत्वादत्र न केवलं गीतं नापि केवलं वाद्यम् । किन्तु गीतानुगतवाद्यमिति ज्ञेयम् । क्रमेण सम्पादिताः इत्यनेन लययतिवाद्यानां वृत्तिसंयोजने पूर्वोक्तक्रमो विवक्षितः । वाद्यविधय इत्यत्र वाद्यशब्देन वाद्यध्वनिविशेष इत्यवगन्तव्यः । शार्दूलविक्रीडितं वृत्तम् ॥

**आर**—( वीणां परित्यज्य आसनादुत्थाय राजानं साभिलाषं पश्यन्ती ) [1]उवज्झाअ, पणमामि ।

**राजा**—( सस्मितं ) यदहमिच्छामि, तत्ते भूयात् ।

**काञ्च**—( आरण्यिकाया आसनं निर्दिश्य ) [2]इह एव्व उवविसदु उवज्झाओ ।

**राजा**—( उपविश्य ) राजपुत्री, क्वेदानीमुपविशतु ।

**काञ्च**—( सस्मितं ) [3]दाणिं एव्व भट्टिदारिआ विज्जागुणपरितोसिदा तुह्मेहिं । ता अरुहदि एव्व एसा उवज्झाअपीठिआए ।

**राजा**—उपविशत्वर्हैयमर्धासनस्य । राजपुत्रि, स्थीयतां ।

**आर**—( काञ्चनमालां पश्यति )

**काञ्च**—( सस्मितम् ) [4]भट्टिदारिए, उववित्त । को एत्थ दोसो । सिस्सविसेसा क्खु तुमं ।

**आर**—( सलज्जोपविशति )

**वास**—( सलज्जं ) [5]भअवदीए अहिअं कप्पिदं कव्वं । ण खु अहं तस्सिं काले एक्कासणे अय्यउत्तेण सह उवविट्ठा ।

**राजा**—राजपुत्रि, पुनश्श्रोतुमिच्छामि । वादय वीणाम् ।

---

१. उपाध्याय प्रणमामि ।

२. अत्रैवोपविशतूपाध्यायः ।

३. इदानीमेव भर्तृदारिका विद्यागुणपरितोषिता युष्माभिः । तदर्हत्येवैषा उपाध्यायपीठिकायै ।

४. भर्तृदारिके, उपविश । कोऽत्र दोषः शिष्यविशेषः खलु त्वम् ।

५. भगवत्या अधिकं कल्पितं काव्यम् । न खल्वहं तस्मिन् काले एकासने आर्यपुत्रेण सहोपविष्टा ।

---

**उपाध्यायेत्यादि** ॥ उपविशतु निषीदतु । परितोषिता अभिनन्दिता ।

**आर**—(सस्मितं) [1]कञ्चणमाले, चिरं खु मम वादअन्तीए परिस्समो जादो। दाणिं णीसहाइं अङ्गाइं। ता ण सक्कुणोमि वादयिदुं।

**काञ्च**—[2]उवज्झाअ, सुट्ठु परिस्सन्ता भट्टिदारिआ कवोलदलबद्धसेदकणजालआ। पेक्ख से वेवन्ति अग्गहत्था। ता समस्सत्था होदु मुहूत्तअं।

**राजा**—काञ्चनमाले, युक्तमभिहितं (हस्ते ग्रहीतुमिच्छति)

**आर**—(हस्तमपसारयति)

**वास**—(सासूयम्) [3]भअवदि अहिअं तुए किदं। णक्खु अहं कञ्चणमाला कव्वेण वंचइदव्वा।

**साङ्कृ**—(विहस्य) आयुष्मति, ईदृशमेव काव्यं भविष्यति।

**आर**—(सरोषमिव) [4]अवेहि कञ्चनमाले, ण मे बहुमदासि।

**काञ्च**—(सस्मित) [5]जेइ अहं चिट्ठती ण बहुमदा, ता अहं गच्छामि (इति निष्क्रान्ता)

---

१. काञ्चनमाले, चिरं खलु मम वादयन्त्याः परिश्रमो जातः। इदानीं निस्सहान्यङ्गानि। तन्न शक्नोमि वादयितुम्।

२. उपाध्याय, सुष्ठु परिश्रान्ता भर्तृदारिका कपोलतलबद्धस्वेदकणजालका। प्रेक्षस्वास्याः वेपते अग्रहस्तौ। तत् समाश्वस्ता भवतु मुहूर्तम्।

३. भगवति अधिकं त्वया कृतम्। न खल्वहं काञ्चनमाला काव्येन वञ्चयितव्या।

४. अपेहि काञ्चनमाले, न मे बहुमतासि।

५. यद्यहं तिष्ठन्ती न बहुमता तदहं गच्छामि।

---

अर्हा योग्या। निस्सहानि श्रमेण अलसानि। कपोलतले गण्डप्रदेशे बद्धाः स्वेदलवाः घर्मोदकबिन्दवः यस्यास्सा। अपसारयति आक्षिपति॥

**आर**—( ससंभ्रमम् ) कंञ्चणमाले चिट्ठ चिट्ठ । अअं से समप्पिदो अग्गहत्थो ।

**राजा**—( आरण्यकायाः हस्तं गृहीत्वा )

**सद्योऽवश्यायबिन्दुव्यतिकरशिशिरः किं भवेत्पद्मकोशः,**
**ह्लादित्वं नास्य मन्ये, सदृशमिदमुषस्येव पीतातपस्य ।**
**मुञ्चन्त्येते हिमौघं नखरजनिकराः पञ्च किं, सोऽपि दाही,**
**ज्ञातं, स्वेदापदेशादविरतममृतं स्यन्दते, व्यक्तमेतत् ॥**

---

१. काञ्चनमाले, तिष्ठ तिष्ठ । अयमस्यार्पितोऽग्रहस्तः ।

---

**सद्य इति** ॥ अयङ्करः, सद्यः तत्क्षणनिपतितानां, अवश्यायानां नीहाराणां, ये बिन्दवः पृषताः, तेषां व्यतिकरेण संबन्धेन, शिशिरः शीतलः, पद्मकोशः तामरसमुकुलः भवेत् किम् । इति वितर्कः । सोपपत्तिकं पूर्वोक्तमाक्षिपति—ह्लादित्वमित्यादिना । अस्य नीहाराक्रान्तस्य कमलमुकुलस्य, ह्लादित्वं आनन्दावहत्वं, न न भवेत् इति मन्ये । अवश्यायपतनस्य कमलशोभाभञ्जकत्वात् तत्संबद्धस्य विच्छायस्य तस्यादर्शनीयतानिबन्धनानन्दानापादकत्वं युज्यते इति भावः । तर्हि केन तुल्यमित्यत आह—सदृशमित्यादिना । इदं मया स्पृश्यमानः करः, सामान्ये नपुंसकम् । उषसि प्रभाते, पीतातपस्य ग्रहीतसूर्यप्रकाशस्य, (बालातपानुविद्धस्येति यावत्) कमलस्येव, सदृशं समानं, तद्वदतिमनोज्ञं आनन्दावहं चेत्यर्थः । यद्वा, एते, पञ्च नखरजनिकराः नखचन्द्राः, हिमौघं नीहारनिकरं, मुञ्चति किं विसृजति किं इति वितर्कः । तदप्याक्षिपति—स इत्यादिना । सोऽपि तादृशश्चन्द्रोऽपि, दाही सन्तापनशीलः ( विरहिवर्गस्येति शेषः ) इत्थं द्वेधा सन्दिह्य सम्प्रति निर्णयते—ज्ञातमित्यादिना । ज्ञातं सम्यगिदानीं मया अवगतम् । स्वेदः घर्मोदकं, तदपदेशात तद्व्याजात्, अविरतं सन्ततं, अमृतं सुधा, स्यन्दते प्रस्रवति । एतत् समनन्तरोक्तमेव, व्यक्तं स्पष्टम् । निश्चयान्तः सन्देहः कैतवापह्नुतिगर्भः । रूपकातिशयोक्तिश्च । स्रग्धरावृत्तम् ॥

अपि च ।

**एतेन बालविद्रुमपल्लवशोभापहारदक्षेण ।**
**हृदये मम त्वयाद्य न्यस्तो रागस्स्वहस्तेन ॥**

**आर**—(स्पर्शविशेषं नाटयन्ती) [1]हद्धि हद्धि, एदं मणोरमं परिस्सन्तीए अग्गहत्थेण एव्व विकरेन्ति मे अङ्गाइं ।

**वास**—( सहसोत्थाय ) [2]भअवदि पेक्ख तुमं । अहं उण अलिअं ण पारेमि पेक्खिदुं ।

**सांकृ**—राजपुत्रि, धर्मशास्त्रविहित एष गान्धर्वो विवाहः । किमत्र लज्जास्थानं । प्रेक्षणीयकमिदं । तन्न युक्तमस्थाने रसभङ्गं कृत्वा गन्तुं ।

**वास**—( परिक्रामति )

**इन्दी**—( विलोक्य ) [3]भट्टिणि, बसंतओ चित्तसालादुवारे पसुत्तो चिट्ठइ ।

---

१. हा धिक् हा धिक् । एतां मनोरमां स्पृशन्त्या अग्रहस्तेनैव विकुर्वते मेऽङ्गानि ।

२. भगवति प्रेक्षस्व त्वम् । अहं पुनः अलीकं न पारयामि प्रेक्षितुम् ।

३. भट्टिनि, वसन्तकश्चित्रशालाद्वारे प्रसुप्तस्तिष्ठति ।

---

**एतेनेति** ॥ बालः अभिनवः यः विद्रुमपल्लवः प्रवालाङ्कुरः तस्य शोभायाः कान्त्याः अपहारे अपहरणे दक्षेण समर्थेन, एतेन, स्वहस्तेन निजकरेण (करणेन) त्वया (कर्त्र्या) मम, हृदये मनसि, अयं रागः (रक्तिमा) अनुरागश्च, न्यस्तः निहितः । पथ्यार्या वृत्तम् ॥

**हा धिगित्यादि** ॥ विकुर्वन्ति मदनविकारपरवशानि भवन्ति । न पारयामि न शक्नोमि । लज्जायाः व्रीडायाः स्थानं आस्पदं, अत्र किं न किमपीत्यर्थः ।

**वास**—( निरूप्य ) [1]वसन्तओ एव्व एसो । ( विचिन्त्य ) रण्णा वि एत्थ होदव्वं । ता बोधिअ पुच्छिस्सं दाव णं ( प्रबोधयति )

**विदू**—( निद्राजडमुत्थाय सहसा विलोक्य ) [2]किं णच्चिअ आअदो पिअवअस्सो आदु णच्चदि एव्व

**वास**—( सविषादं ) [3]कहं अज्जउत्तो णच्चदि । मणोरमा दाणिं कहं ।

**विदू**—[4]एसा चित्तसालाए चिट्ठइ ।

**मनो**—( सभयम् ) [5]कहं अण्णहा एव्व हिअए करिअ देवीए मंतिदं । एदेण मुक्खवडुएण अण्णहा एव्व बुद्धिअ सव्वं आउलीकिदं ।

**वास**—( सरोषं हसन्ती ) [6]साहु मणोरमे साहु । सोहणं तुए णच्चिदं ।

**मनो**—( सभयं कम्पमाना पादयोर्निपत्य ) [7]भट्टिणि, ण खु अहं एत्थ अवरज्झामि । एदेण क्खु हदासेण बलादो अलङ्करणाइं गेण्हिअ

१. वसन्तक एवैषः । राज्ञाप्यत्र भवितव्यम् । तत् बोधयित्वा प्रक्ष्यामि तावदेनम् ।

२. किं नर्तित्वा आगतः प्रियवयस्यः अथवा नृत्यत्येव ।

३. कथमार्यपुत्रो नृत्यति । मनोरमेदानीं कथम् ।

४. एषा चित्रशालायां तिष्ठति ।

५. कथमन्यथैव हृदये कृत्वा देव्या मन्त्रितम् । एतेन मूर्खवटुकेनान्यथैव बुद्ध्वा सर्वमाकुलीकृतम् ।

६. साधु मनोरमे साधु । शोभनं त्वया नर्तितम् ।

७. भट्टिनि, न खल्वहमत्रापराध्यामि । एतेन खलु हताशेन बलात् अलङ्-

अस्थाने असमये, रसभङ्गं वैरस्यं, बोधयित्वा उद्बोध्य, निद्रया जडं अलसं यथा तथा इति क्रियाविशेषणमव्ययमेतत् । नटित्वा नर्तित्वा, सविषादं सदुःखं, चित्र-शालायां चित्रमण्टपे । आकुलीकृतं नाशितम् । कम्पमाना वेपमाना । अपराद्ध्या-

दुवारट्ठिदेण इमिणा इह णिरुद्धा । मए आक्कंदिदेवि मुरअणिग्घोसंतरिदो ण केण वि सद्दो सुदो ।

**वास**—[1]हंजे, उट्ठेहि । जाणिदं सव्वं । वसन्तओ क्खु आरण्णिआवुत्तन्तणाडअसुत्तधारो

**विदू**—[2]सअं एव्व चिंतेहि । कहिं आरण्णिआ कहिं वसन्तओ ।

**वास**—[3]मणोरमे सुगहिदं करिअ णं आअच्छ । पेक्खणीअं से पेक्खह्म ।

**मनो**—( स्वगतम् ) [4]दाणिं समस्ससिदह्मि । ( प्रकाश ) तह ( इति विदूषकं कण्ठे बद्ध्वा ) हदास दाणिं अणुहव अत्तणो दुण्णअस्स फलं ।

**वास**—( ससंभ्रममुपसृत्य ) [5]अय्यउत्त, पडिहदममङ्गलं । (इति पादयोः नीलोत्पलदामापनयति )

---

रणानि गृहीत्वा द्वारस्थितेनानेनेह निरुद्धा । मयाक्रन्दितेऽपि मुरजनिर्घोषान्तरितो न केनापि शब्दः श्रुतः ।

१. हञ्जे, उत्तिष्ठ । ज्ञातं सर्वम् । वसन्तकः खलु आरण्यकावृत्तान्तनाटकसूत्रधारः ।

२. स्वयमेव चिन्तय । कुत्र आरण्यका कुत्र वसन्तकः ।

३. मनोरमे, सुगृहीतं कृत्वैनमागच्छ । प्रेक्षणीयकं तस्य प्रेक्षामहे ।

४. इदानीं समाश्वासितास्मि । तथा । हताश इदानीमनुभव आत्मनो दुर्नयस्य फलम् ।

५. आर्यपुत्र, प्रतिहतममङ्गलम् ।

---

मि अपराधयुक्ता भवामि । हताशेन दुर्हृदयेन, निरुद्धा प्रतिषिद्धा । आक्रन्दिते उच्चैश्शब्दितेऽपि, मम, शब्दः, मुरजनिर्घोषान्तरितो, न, श्रुतः इति सम्बन्धः ।

**आर**—( सभयमपसृत्य तिष्ठति )

**राजा**—( सहसोत्थाय विदूषकं मनोरमां च दृष्ट्वा, आत्मगतं ) कथं विज्ञातोऽस्मि । ( वैलक्ष्यं नाटयति )

**वास**—( सोत्प्रासं ) मरिसदु[1] अय्यउत्तो । तुमं मणोरमेत्ति करिअ णीलुप्पलदामएण बद्धाविदोऽसि ।

**सांकृ**—( सर्वानवलोक्य, सस्मितं ) कथमन्यदेवेदं प्रेक्षणीयकं संवृत्तं । अभूमिरियमस्मद्विधानाम् । ( इति निष्क्रान्ता )

**राजा**—( आत्मगतं ) अपूर्वोऽयं कोपप्रकारः । दुर्लभमत्रानुनयं पश्यामि । ( विचिन्त्य ) एवं तावत् करिष्ये । ( प्रकाशं ) देवि त्यज्यतां कोपः

**वास**—को[2] एत्थ कुविदो ।

**राजा**—कथं न कुपितासि ।

**स्निग्धं यद्यपि वीक्षितं, नयनयोस्ताम्रा तथापि द्युतिः,**
**माधुर्येऽपि सति स्खलत्यनुपदं ते गद्गदा वागियं ।**

---

१. मर्षयतु आर्यपुत्रः । त्वं मनोरमेति कृत्वा नीलोत्पलदाम्ना बद्धोऽसि ।

२. कोऽत्र कुपितः ।

---

सूत्रधारः उपक्रमिता । प्रेक्षणीयकं नाटकं, दुर्नयस्य अनीतेः । वैलक्ष्यं विस्मयनिबन्धनं स्तब्धत्वं, सोत्प्रासं मनाक् स्मितसहितं यथा तथा । अभूमिः अगोचरः । अनुनयं सान्त्वनम् ॥

**स्निग्धमिति** ॥ एष, ते, कोपः, प्रकटेन आभिव्यक्तेन, प्रसादेन विधृतोऽपि अन्तर्नियमितोऽपि, स्फुटं व्यक्तं यथा तथा, लक्ष्यते दृश्यते । तमेव कोपाभिव्यक्ति-

निश्वासा नियता अपि स्तनभरोत्कम्पेन संलक्षिताः,
कोपस्ते प्रकटप्रसादविधृतोऽप्येषस्स्फुटं लक्ष्यते ॥

(पादयोर्निपत्य) प्रसीद प्रिये प्रसीद

**वास**—[1]आरण्णिए तुमं कुविदेत्ति अय्यउत्तो पसादेदि । ता उवसप्प (इति हस्तेनाकर्षति)

**आर**—(सभयं) [2]भट्टिणि अहं किंवि ण आणामि ।

**वास**—[3]आरण्णिए तुमं कहं जाणासि । दाणिं दे सिक्खावेमि । इन्दीवरिए गेह्ण एदं ।

**विदू**—[4]होदि अज्ज कोमुदीमहूसवे तुह चित्तं अवहरिदुं वअस्सेण पेक्खणअं अणुट्ठिदं ।

**वास**—[5]एदं तुह्माणं दुण्णअं पेक्खिअ हासो मे जाअदि ।

---

१. आरण्यिके, त्वं कुपितेति आर्यपुत्रः प्रसादयति तदुपसर्प ।

२. भट्टिनि, अहं किमपि न जानामि ।

३. आरण्यके, त्वं कथं न जानासि । इदानीं ते शिक्षये । इन्दीवरिके गृहाणेमाम् ।

४. अद्य कौमुदीमहोत्सवे तव चित्तमपहर्तुं वयस्येन प्रेक्षणीयमनुष्ठितम् ।

५ एतत् युष्माकं दुर्णयं प्रेक्ष्य हासो मे जायते ।

---

प्रकारमाह—स्निग्धमित्यादिना । यद्यपि, स्निग्धं मनोज्ञं यथा तथा, वीक्षितं आलोकितम् । तथापि नयनयोः नेत्रयोः, द्युतिः कान्तिः, ताम्रा अरुणा । माधुर्ये मधुरभावे सत्यपि, इयं ते, वाक्, गद्गदा गद्गदस्वनसहिता, अनुपदं पदे पदे, स्खलति निरुद्धप्रसरा भवति । निश्वासाः, नियताः अपि निरुद्धा अपि, स्तनभरयोः कुचभारयोः उत्कम्पेन चलनेन, संलक्षिताः सन्दर्शिताः । शार्दूलविक्रीडितं वृत्तम् ॥

**प्रसीदेत्यादि** ॥ प्रसीद प्रसन्ना भव । वयस्येन मित्रेण महाराजेनेति

**राजा**—अलमन्यथाविकल्पनेन । पश्य—

भ्रूभङ्गैः क्रियते ललाटशशिनः कस्मात्कलङ्कोऽधुना,
वाताकम्पितबन्धुजीवसमतां नीतोऽधरः किं स्फुरन् ।
मद्ध्यश्चाधिककम्पितस्स्तनभरेणायं पुनः खिद्यते,
कोपं मुञ्च तवैव चित्तहरणायैवं मया क्रीडितम् ॥

देवि प्रसीद प्रसीद (इति पुनः पादयोः पतति)

**वास**—हञ्जे णिव्वुत्तं पेक्खणिअं । ता एहि अब्भन्तरं एव्व पविसह्म[1] (इति निष्क्रान्तः स्त्रीवर्गो विदूषकश्च)

**राजा**—(विलोक्य) कथमकृत्वैव प्रसादं गता देवी—

स्वेदाम्भःकणभिन्नभीषणतरभ्रूभङ्गमेकं रुषा,
त्रासेनापरमुत्प्लुतोत्प्लुतमृगीव्यालोलनेत्रोत्पलम् ।

१. हञ्जे, निर्वृत्तं प्रेक्षणीयकम् । तदेहि अभ्यन्तरमेव प्रविशामः ।

यावत् । प्रेक्षणीयं नाटकम् । अन्यथाविकल्पनं अन्यथाचिन्तनम् ॥

**भ्रूभङ्गैरिति** ॥ भ्रुवोः चिल्लिकयोः भङ्गैः कौटिल्यैः, ललाटं अलिकमेव शशी चन्द्रः तस्य, कलङ्कः अङ्कः, अधुना इदानीं, कस्मात, क्रियते विधीयते ? स्फुरन् वेपमानः, अधरः, किं किमर्थं, वातेन वायुना आ समन्तात् ईषद्वा कम्पितस्य चलितस्य बन्धुजीवस्य बन्धुजीवकुसुमस्य समतां साम्य, नीतः प्रापितः ? अयं, मद्ध्यः अवलग्नश्च, अधिकं यथा तथा कम्पितेन चाञ्चल्यं प्रापितेन स्तनभरेण पयोधरमण्डलेन, पुनः भूयोऽपि, किं खिद्यते किमर्थं श्रमं प्राप्यते । कोपं रोषं, मुञ्च त्यज । तव भवत्याः, चित्तहरणायैव मनोविनोदनायैव, मया, एवं इत्थं क्रीडितं विहृतम् । स्वभावोक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥

**स्वेदेति** ॥ रुषा कोपेन कारणेन (समुत्पन्नैः) स्वेदाम्भःकणैः घर्मोदबिन्दुभिः भिन्नाः मिश्राः भीषणतराः भयङ्कराः भ्रूभङ्गाः भ्रुकुटयः यत्र तादृशं, अपरः

उत्पश्यन्नहमग्रतो मुखमिदं देव्याः प्रियायास्तथा,
भीतश्चोत्सुकमानसश्च महति क्षिप्तोऽस्म्यहं सङ्कटे ॥

तद्यावदिदानीं शयनीयं गत्वा देव्याः प्रसादनोपायं चिन्तयामि ।

( इति निष्क्रान्तास्सर्वे )

॥ इति तृतीयोऽङ्कः ॥

---

पुरः दृश्यमानं, इदं, देव्याः वासवदत्तायाः एकं मुखं वदनं, तथा, त्रासेन देव्याः भयेन, उत्प्लुतोत्प्लुता अत्यन्तं आक्रान्ता या मृगी सारङ्गी तस्याः नेत्रे इव व्यालोले अतिचञ्चले नेत्रोत्पले नयनकुवलये यत्र तादृशं, व्यालोले चञ्चले नेत्रोत्पले नयनारविन्दे यस्मिंस्तत् तादृशं, अपरं, प्रियायाः आरण्यिकायाः मुखं च उत्पश्यन्, अहं, क्रमेण, भीतश्चः उत्सुकमानसश्च, महति पृथुले, सङ्कटे अनर्थे, क्षिप्तः पातितः, अस्मि । यथासङ्ख्यालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

इति श्रीसारस्वतसारज्ञकविशिखामणि तट्टै वाधूलश्रीनिवास-
सूरिविरचिते सारास्वादाख्याने प्रियदर्शिकाव्याख्याने
तृतीयोऽङ्कः समाप्तः ॥

## चतुर्थोऽङ्कः ॥

(ततः प्रविशति मनोरमा ।)

**मनो**—(सोद्वेगम् ।) अहो दीहरोसदा देवीए । एत्तिअं कालं बद्धाए वि पिअसहीए आरण्णिआए उवरि अणुग्गहं ण गेण्हइ (साम्रं) सा तवस्सिणी अत्तणो बन्धणस्स किदे ण तह संतप्पदि, जह भट्टिणो दंसणणिरासदाए । ईरिसं अ से दुःखं । जेण एव्वं अत्ताणं वावादअन्ती मए कहं वि, णिवारिदा । एदं उत्तंतं भट्टिणो णिवेदेहि त्ति वसंतअं भणिअ आअदह्मि ।

(ततः प्रविशति काञ्चनमाला ।)

**काञ्च**—कहं अण्णेसंतीए वि मए भअवदी संकिच्चाअणी ण दिट्ठा । (विलोक्य ।) ता एदं वि दाव मणोरमं पुच्छिस्सं (उपसृत्य) मणोरमे अवि जाणासि कहिं भअवदी संकिच्चाअणि त्ति ।

---

१. अहो दीर्घरोषता देव्याः । एतावन्तं कालं बद्धाया अपि प्रियसख्या आरण्यिकाया उपरि अनुग्रहं न गृह्णाति । सा तपस्विनी आत्मनो बन्धनस्य कृते न तथा सन्तप्यते । यथा भर्तुः दर्शननिराशतया । ईदृशं चास्या दुःखम् । येनैवं आत्मानं व्यापादयन्ती मया कथमपि विनिवारिता । एनं वृत्तान्तं भर्तुः निवेदयेति वसन्तकं भणित्वा आगतास्मि ।

२. कथमन्वेषयन्त्यापि मया भगवती साङ्कृत्यायनी न दृष्टा । तदेतामपि तावत मनोरमां प्रेक्ष्यामि । मनोरमे अपि जानासि कुत्र भगवती साङ्कृत्यायनीति ।

---

**अहो इत्यादि** ॥ देव्याः वासवदत्तायाः, दीर्घरोषता अनुस्यूतकोपवत्त्वम् । अनुग्रहं दयां, साम्रं बाष्पेण सहितं यथातथा, तपस्विनी शोच्या, निराशतया नैराश्यात् (हेतोः) व्यापादयन्ती हन्तुं प्रयतमाना, कथमपि अतिप्रयासेन, निवारिता

**मनो**—(विलोक्य अश्रूणि प्रमृज्य ।) हला[1] कञ्चणमाले दिट्ठाए ताए किं पओअणं ।

**काञ्च**—मणोरमे[2] अज्ज देवीए अङ्गारवदीए लेहो अणुप्पेसिदो । तस्सिं वाइदे बाहपुण्णणअणा दिढं सन्तप्पिदुं आरद्धा देवी । ता विणोदणणिमित्तं ताए भअवदिं अण्णेसामि ।

**मनो**—हला[3] किं उण तस्सिं लेहे आलिहिदं ।

**काञ्च**—जा[4] मह भइणी सा तव जणणी एव्व । ताए भत्ता दिढवम्मा तादो दे । ता तव किं एदं आचक्खिदव्वं । तस्स समधिअं संवच्छरं कलिङ्गहदएण बद्धस्स । ता ण जुत्तं एदं वुत्तंतं अणाचक्खिअ समीवट्ठिदस्स समत्थस्स भत्तुणो दे एव्वं उदासीणत्तणं ओलंबिदुंति ।

---

१. हला काञ्चनमाले, दृष्टया तया किं प्रयोजनम् ।

२. मनोरमे, अद्य देव्या अङ्गारवत्या लेखः अनुप्रेषितः । तस्मिन् वाचिते बाष्पपूर्णनयना दृढं सन्तप्तुमारब्धा देवी । तत् विनोदननिमित्तं तस्याः भगवतीमन्वेषयामि ।

३. हला किं पुनः तस्मिन् लेखे आलिखितम् ।

४. या मम भगिनी सा तव जनन्येव । तस्या भर्ता दृढवर्मा तातस्ते । तत्तव किमाख्यातव्यम् । तस्य समधिकं संवत्सरं कलिङ्गहतकेन बद्धस्य । तन्न युक्तमेनं वृत्तान्तं अनाख्याय समीपस्थितस्य समर्थस्य भर्तुस्ते एवमुदासीनत्वमवलम्बितुमिति ।

---

प्रतिषिद्धा, भणित्वा कथयित्वा । अन्विष्यन्त्या मार्गयन्त्या, भगवती महिमशालिनी, अश्रूणि नेत्रजलानि, प्रमृज्य अपोह्य, लेखः पत्रिका । वाचिते पठिते, सन्तप्तुं दुःखितुं, आरब्धा उपक्रान्ता । विनोदनं सुखेन कालयापनं, उदासीनत्वं ताटस्थ्यं,

**मनो**—[1]हला कंचणमाले जदो दाव अअं वुत्तन्तो भट्टिणीए ण केणवि विण्णावइदव्वोत्ति भट्टिणा आणत्तं, ता केण उण दाणिं सो लेहो सुणाविदो ।

**काञ्च**—[2]अणुवाइअ तुह्णिंभूदाए मम हत्थादो गेण्हिअ सअं देवीए वाइदो ।

**मनो**—[3]तेण गच्छ तुमं । एसा क्खु देवी ताए एव्व सह दंत-वलभीए चिट्ठइ ।

**काञ्च**—[4]ता भट्टिणीसआसं गमिस्सं (इति निष्क्रान्ता ।)

**मनो**—[5]चिरं क्खु मे आरण्णिआसआसादो आअदाए । दिढं णिव्विण्णा सा तवस्सिणी अत्तणो जीविदेण । कदावि अच्चाहिदं भवे । ता तहिं एव्व गच्छह्मि ।

(इति निष्क्रान्ता ।)

॥ प्रवेशकः ॥

---

१. हला काञ्चनमाले, यतस्तावदयं वृत्तान्तः भट्टिन्याः न केनापि विज्ञापयितव्य इति भर्त्रा आज्ञप्तं, तत् केन पुनरिदानीं स लेखश्श्रावितः ।

२. अनुवाच्य तूष्णींभूताया मम हस्तात् गृहीत्वा स्वयं देव्या वाचितः ।

३. तेन गच्छ त्वम् । एषा खलु देवी तयैव सह दन्तवलभ्यां तिष्ठति ।

४. ततः भट्टिनीसकाशं गमिष्यामि ।

५. चिरं खलु मम आरण्यिकासकाशादागतायाः । दृढं खलु निर्विण्णा सा तपस्विनी आत्मनो जीवितेन । कदापि अत्याहितं भवेत् । तत् तत्रैव गच्छामि ।

---

अवलम्बितु आश्रयितुम् । श्रावितः श्रुतिविषयं प्रापितः । अनुवाच्य पठित्वा तूष्णींभूतायाः मौनमाश्रितायाः, वाचितः पठितः । दन्तवलभिः दन्तैः विरचिता चन्द्रशाला । सकाशं समीपम् । निर्विण्णा निर्वेदं प्राप्ता । अत्याहितं महाभीतिम् । प्रवेशकलक्षणन्तु "वृत्तवर्तिष्यमाणानां कथांशानां प्रदर्शकः । प्रवेशकस्तु नाद्येऽङ्के नीचपात्रप्रयोजितः ।" इति ॥

(ततः प्रविशति सोद्वेगा आसनस्था वासवदत्ता, सांकृत्यायनी, विभवतश्च परिवारः।)

**सांकृ**—राजपुत्रि अलमुद्वेगेन । नेदृशो वत्सराजः । कथमित्थं-गतमपि भवत्या मातृष्वसृपतिं विज्ञाय वत्सराजो निश्चिन्तस्स्थास्यति ।

**वास**—(सास्रं) [1]भअवदि अदिउज्जुआ दाणिं तुमं । जस्स मए ण कज्जं, तस्स मम केरएण जणेण किं कज्जम् । अज्जुआए वि जुत्तं मम एदं आलिहिदुं । सा उण जाणादि अज्ज वि तारिसी एव्व वासव-दत्तेत्ति । तुह उण एदं आरण्णिआउत्तंतं पच्चक्खं । ता कहं एदं भणासि ।

**सांकृ**—यत एव मे प्रत्यक्षमत एव ब्रवीमि । तेन ननु कौमुदी-महोत्सवे त्वां हासितुं तथा क्रीडितम् ।

**वास**—[2]भअवदि एत्थ सच्चं हसिदह्मि । जेण भअवदीए पुरदो लज्जाए कहं वि चिट्ठामि । ता किं तक्केरकाए कहाए । एदेण एव्व पक्खवादेण एत्तिअं भूमिं णीदह्मि (इति रोदिति ।)

---

१. भगवति अतिऋज्वीदानीं त्वं । यस्य मया न कार्यं तस्य मदीयेन जनेन किं कार्यं । अज्जुकाया अपि युक्तं ममैतदालिखितुं । सा पुनर्जानाति अद्यापि तादृश्येव वासवदत्तेति । तव पुनरिदमारण्यिकावृत्तान्तः प्रत्यक्षः । तत् कथमेतत् भणसि ।

२. भगवति अत्र सत्यं हासितास्मि । येन भगवत्याः पुरतः लज्जया कथम-पि तिष्ठामि । तत्किं तदीयया कथया । एतेनैव पक्षपातेन एतावतीं भूमिं नीतास्मि

---

**तत इत्यादि** । उद्वेगः मनोव्यथा । अलमुद्वेगेन उद्वेगो मास्तु । निश्चिन्तः चिन्तारहितः । अतिऋज्वी अकुटिलहृदया, अज्जुका माता । भणसि वदसि । पक्ष-

**सांकृ**—राजपुत्रि अलं रुदितेन । नेदृशो वत्सराजः । (विलोक्य) अथवा प्राप्त एवायं वत्सराजः । यस्ते मन्युप्रमार्जनं करोति ।

**वास**—[1]मणोरहा दाणिं एदे भअवदीए ।

(ततः प्रविशति राजा विदूषकश्च ।)

**राजा**—क इवाभ्युपायः प्रियां मोचयितुं ।

**विदू**—[2]भो वअस्स मुञ्च विसादं । अहं दे उवाअं कहइस्सम् ।

**राजा**—(सहर्षं ।) वयस्य त्वरितमभिधीयतां ।

**विदू**—[3]भो तुमं दाव अणेअसमरसंघट्टप्पहाराङ्किदबाहुसालो पुणो वि अणेअगअतुरअपदाइदुव्विसहबलसमुदिदो । ता सव्वबलसन्दोहेण अन्तेउरं संपीडिअं करिअ दाणिं एव्व आरण्णिअं मुञ्चावेहि ॥

**राजा**—वयस्य अशक्यमुपदिष्टम् ।

**विदू**—[4]किं एत्थ असक्कं । जदो कुज्जवामणमुद्धघेरकञ्चुइवज्जिदो मणुस्सो अवरो णत्थि तहिं ।

**राजा**—(सावज्ञं ।) किमसम्बद्धं प्रलपसि । देव्याः प्रसादं मुक्त्वा नान्यस्तस्या मोक्षाभ्युपायः । तत् कथय कथं देवीं प्रसादयामि ।

---

१. मनोरथा इदानीं एते भगवत्याः ।

२. भो वयस्य मुञ्च विषादं । अहं ते उपायं कथयिष्यामि

३. भोः त्वं तावत् अनेकसमरसङ्घट्टप्रहाराङ्कितबाहुसालः अनेकगजतुरगपदातिदुर्विषहबलसमुदितः । तत् सर्वबलसन्दोहेन अन्तःपुरं संपीडितं कृत्वेदानीमेवारण्यिकां मोचय ।

४. किमत्राशक्यं । यतः कुब्जवामनमुग्धगृहकञ्चुकिवर्जितो मनुष्यः अपरो नास्ति तत्र ॥

---

पातः प्रेम । अभ्युपायः उपायः । समरसङ्घट्टः युद्धसङ्घर्षः । बलसन्दोहेन सेनासमुदायेन, कुब्जाः स्थगुनाकुटिलितगात्राः । वामनाः खर्वाः । सावज्ञं सावहेळनम् । असम्बद्धं अन्योन्यसम्बन्धरहितं यथा तथा । प्रलपसि अनर्थकं वचः प्रकटयसि ।

**विदू—**[1]भो मासोववासं करिअ जीविदं धारेहि जदि एव्वं देवी चण्डी पसीदिस्सदि ।

**राजा—**(विहस्य ।) अलं परिहासेन । कथं कथय देवीं प्रसादयिष्यामि—

धृष्टः किं पुरतोऽवरुद्ध्य विहसन् गृह्णामि कण्ठे प्रियां
किं वा चाटुशतप्रपञ्चरचनाप्रीतां करिष्यामि ताम् ।
किं तिष्ठामि कृताञ्जलिर्निपतितो देव्याः पुनः पादयोः
सत्यं सत्यमहो न वेद्म्यनुनयो देव्याः कथं स्यादिति ॥

तदेहि देवीसकाशमेव गच्छावः ।

**विदू—**[2]भो गच्छ तुमं । अहं उण दाणिं एव्व बन्धणादो कहं वि परिब्भंसिअ आअदो । ता गमिस्सं ।

---

१. भो मासोपवासं कृत्वा जीवितं धारयसि यदि एवं देवी चण्डी प्रसत्स्यति ।

२. भो गच्छ त्वं । अहं पुनरिदानीमेव बन्धनात् कथमपि परिभ्रश्यागतः । तत् गमिष्यामि ।

---

उपवासं अनशनव्रतम् । चण्डी कोपना । प्रसत्स्यति प्रसन्ना भविष्यति । प्रसादयामि आगःपरिमार्जनेन चित्तनैर्मल्ययुक्तां करोमि ॥

**धृष्ट इति** ॥ अहं, धृष्टः अभीतस्सन्, पुरतः अग्रे, अवरुद्ध्य गमनसरणिं निरुद्ध्य, विहसन् हासं कुर्वाणः, प्रियां प्रेयसीं वासवदत्तां, कण्ठे ग्रीवायां, गृह्णामि आश्लिष्यामि किम् । वा अथवा, तां मत्प्रेयसीं, चाटूनां प्रियवचनानां शतस्य यः प्रपञ्चः विस्तारः तस्य या रचना निरर्गलगुम्भना तया प्रीतां सन्तुष्टां, करिष्यामि किं विधास्यामि किम् । अथवा, देव्याः, पुरतः अग्रतः, पादयोः चरणयोः, निपतितः अपराधमर्षणाय प्रणिपतन्, कृताञ्जलिः विरचितप्रणाममुद्रः तिष्ठामि, किम् । अहो आश्चर्यं, तस्याः वासवदत्तायाः विषये, अनुनयः प्रसादनव्यापारः, कथं स्यात्, इति, सत्यं सत्यं तथ्यमेव, न वेद्मि न जाने । शार्दूलविक्रीडितं वृत्तम् ॥

**तदित्यादि** ॥ सकाशं समीपम् । बन्धनात् कारागृहात् । निवर्तयति

**राजा**—(विहस्य, कण्ठे गृहीत्वा, बलान्निवर्तयति ।) मूर्ख आगम्यतां (परिक्रम्यावलोक्य च ।) इयं देवी दन्तवलभीमध्यास्ते । यावदुपसर्पामि (सलज्जमुपसर्पति ।)

**वास**—(सखेदमासनादुत्तिष्ठति ।)

**राजा**—

**किं मुक्तमासनमलं मयि संभ्रमेण**
**नोत्थातुमित्थमुचितं मम तान्तमध्ये ।**
**दृष्टिप्रसादविधिमात्रहतो जनोऽय-**
**मत्यादरेण किमिति क्रियते विलक्षः ॥**

**वास**—(मुखं निरूप्य) [1]विलक्खो दाणिं तुमं होसि ।

**राजा**—प्रिये सत्यमहं विलक्षः । यत् प्रत्यक्षदृष्टापराधो भवतीं प्रसादयितुं व्यवसितोऽस्मि ।

**सांकृ**—(आसन निर्दिश्य) क्रियतामासनपरिग्रहः ।

---

१. विलक्ष इदानीं त्वं भवसि ।

---

परावर्तयति । दन्तवलभीं दन्तैः खचितां चन्द्रशालां, अध्यास्ते अधितिष्ठति । "अधिशीङ्स्थासां कर्म" इत्यनेन अध्युपसृष्टस्य आस्तेर्योगे द्वितीया ॥

**किमिति** ॥ आसनं विष्टरं, किं किमर्थं, मुक्तं त्यक्तम् । मयि विषये, सम्भ्रमेण त्वरया, अलं सम्भ्रमो मास्त्वित्यर्थः । हे तान्तमद्ध्ये अतिगुरुतरपयोधर-युगमभारधूर्वहतया नितान्ततान्तावलग्नप्रदेशसहिते, मम मदर्थं, इत्थं एवं, उत्थातुं, नोचितं न युक्तम् । दृष्ट्योः नेत्रयोः प्रसादविधिः प्रसदनव्यापारः स एव प्रसादविधिमात्रं तेन हृतः विधेयीकृतः, अयं जनः, अत्यादरेण (हेतुना) किमिति, विलक्षः विस्मितः, क्रियते विरच्यते । वसन्ततिलकं वृत्तम् ॥

**विलक्ष इत्यादि** ॥ प्रत्यक्षं अभिमुखम् । व्यवसितः प्रयत्नवान् । उपविशति निषीदति, उपविष्टा निषण्णा ॥

**राजा**—(आसनं निर्दिश्य) इत इतो देव्युपविशतु ।

**वास**—(भूमावुपविशति ।)

**राजा**—आः कथं भूमावुपविष्टा देवी अहमप्यत्रैवोपविशामि । (इति भूमावुपविश्य ।) प्रिये प्रसीद प्रसीद । किमेवं प्रणतेऽपि मयि गभीरतरं कोपमुद्वहसि ।

**भ्रूभङ्गं न करोषि, रोदिषि मुहुर्मुग्धेक्षणे केवलं,**
**नातिप्रस्फुरिताधराऽनवरतं निश्वासमेवोज्झसि ।**
**वाचं नापि ददासि, तिष्ठसि परं प्रध्यातनम्रानना,**
**कोपस्ते स्तिमितोऽतिपीडयति मां गूढप्रहारोपमः ॥**

प्रिये प्रसीद प्रसीद (इति पादयोः पतति ।)

**वास**—[1]अदिसुहिदो दाणिं सि । कीस दाणिं दुःक्खिदं जणं विआरेसि । उट्ठेहि उट्ठेहि । को एत्थ कुविदो ।

---

१. अतिसुखित इदानीमसि । कस्मादिदानीं दुःखितं जनं विकारयसि । उत्तिष्ठोत्तिष्ठ । कोऽत्र कुपितः

---

**भ्रूभङ्गमिति** ॥ हे मुग्धेक्षणे सुन्दरलोचने, भ्रूभङ्गं क्रोधाविष्कारिकां भ्रुकुटिं, न करोषि न तनोषि । मुहुः पुनःपुनः, केवलं रोदिषि रोदनमात्रं करोषि । नातिप्रस्फुरितः नात्यन्तकम्पितः अधरः रदनच्छदः यस्यास्सा तादृशी सती, अनवरतं सततं, निश्वासमेव, उज्झसि बहिः प्रसारयसि । वाचं मत्प्रश्नोत्तरं वचनं, न ददासि न प्रयच्छसि । परं किन्तु, प्रध्यातं प्रकृष्टचिन्तालीढं अत एव नम्रं न्यञ्चत् आननं मुखं यस्यास्सा तादृशी सती, तिष्ठसि पुरस्तात् विद्यसे । अतः, स्तिमितः बाह्यानुभावशून्यत्वात् गूढः, अतएव, गूढेन मर्मस्थानसम्बद्धेन, प्रहारेण अभिघातेन उपमा सादृश्यं यस्य तादृशः, ते कोपः, मां, अतिपीडयति अत्यन्तं हिनस्ति । शार्दूलविक्रीडितं वृत्तम् ॥

**अतीत्यादि** ॥ दुःखितां विषण्णां विकारयसि व्यथयसि । संसभ्रम

**सांकृ**—उत्तिष्ठ महाराज। किमनेन। अन्यदेव तावदुद्वेगकारणमस्याः।

**राजा**—(ससंभ्रमम्) भगवति किमन्यत्।

**सांकृ**—(कर्णे कथयति।)

**राजा**—(विहस्य) यद्येवमलमुद्वेगेन। मयापि ज्ञातं। सिद्ध एवास्मिन् प्रयोजने देवीं तुष्ट्या वर्धयिष्यामीति नोक्तं। अन्यथा कथमहं दृढवर्मवृत्तान्ते विस्रब्धस्तिष्ठामि। तत्कतिपयान्यहानि तद्वार्ताया आगतायाः। इदं च तत्र वर्तते।

> अस्मद्बलैर्विजयसेनपुरस्सरैस्तै-
> राक्रान्तबाह्यविषयो विहतप्रतापः।
> दुर्गं कलिङ्गहतकस्सहसा प्रविश्य
> प्राकारमात्रशरणः किल वर्ततेऽसौ॥

तदवस्थं च तं—

---

सत्वरम्। अलमुद्वेगेन उद्वेगो मास्तु। प्रयोजने कार्ये फले वा, सिद्धे निष्पन्ने, वर्धयिष्यामि सन्तोषयिष्यामि। विस्रब्धः सविस्रम्भः॥

**अस्मदिति**॥ विजयसेनः पुरस्सरः येषां तैः तादृशैः, अस्मद्बलैः अस्मत्सैन्यैः, आक्रान्तः व्याप्तः बाह्यः बहिर्भवः विषयः देशः यस्य सः, अत एव विहतः नष्टः प्रतापः शत्रुसन्तापनशक्तिः यस्य सः, तादृशः असौ कलिङ्गहतकः दुष्टः कलिङ्गराजः, सहसा झटिति, दुर्गं स्वात्मसंरक्षणसमर्थं शत्रुभिर्दुराक्रमं प्रदेशविशेषं, प्रविश्य अवगाह्य, (निलीनः) प्राकारः सालः स एव शरणं यस्य तादृशः, सन् वर्तते। किलेति वार्तायां। वसन्ततिलकं वृत्तम्॥

निर्दिष्टाक्रन्दमन्दं प्रतिदिनविरमद्वीरदासेरवृत्तं
शश्वत्संशीर्यमाणद्विपतुरगनरक्षीणनिश्शेषसैन्यम् ॥
अद्य श्वो वापि भग्ने झटिति मम बलैस्सर्वतस्तत्र दुर्गे
बद्धं युद्धे हतं वा भगवति नचिराच्छ्रोष्यसि त्वं कलिङ्गम् ॥

**सांकृ**—राजपुत्रि, प्रथमतरमेव भवत्याः कथितं मया । किमप्रतिविधाय वत्सराजस्स्थास्यतीति ।

**वास**—[१]जइ एव्वं पिअं मे पिअं ।

(प्रविश्य प्रतीहारी ।)

**प्रती**—[२]जेदु जेदु भट्टा । एसो क्खु विअअसेणो दिढवम्मकंचुइसहिओ हारसमुप्फुल्लोअणो पिअं णिवेदिदुकामो दुवारे चिट्ठइ ।

---

१. यद्येवं प्रियं मे प्रियम् ।

२. जयतु जयतु भर्ता । एष खलु विजयसेनः दृढवर्मकञ्चुकिसाहितः हर्षसमुत्फुल्लोचनः प्रियं निवेदयितुकामः द्वारे तिष्ठति ।

---

**निर्दिष्टेति** ॥ अद्य, अस्मिन्नहनि, श्वः परस्मिन्नहनि, वा, मम, बलैः सैनिकैः, झटिति शीघ्रं, तत्र कलिङ्गहतकाधिष्ठिते, दुर्गे, सर्वतः समन्तात्, विभग्ने सति ध्वस्ते सति । भगवतीति साङ्कृत्यायन्यास्सम्बोधनमेतत् । त्वं, तं युद्धे, बद्धं, कलिङ्गं हतं वा नचिरात् अचिरेणैव, श्रोष्यसि श्रवणगोचरीकरिष्यसि । निर्दिष्टेत्यादीनि कलिङ्गविशेषणानि । निर्दिष्टः प्रकृते कथितः यः आक्रन्दः युद्धं "आक्रन्दो दारुणे रणे" इत्यमरः । मन्दं असमर्थम् । दिने दिने प्रतिदिनं विरमन्तः विरामं प्राप्नुवन्तः ये वीराः दासेराः दासाश्च । "भृत्ये दासेरदासेय" इत्यमरः । तेषां वृत्तं चरितं यस्य तं, शश्वत् पुनःपुनः संशीर्यमाणाः नाशं प्राप्नुवानाः ये द्विपाः गजाः, तुरगाः अश्वाः, नराः योधाः, तैः क्षीणं सङ्कुचितं निरवशेषं समग्रं सैन्यं सेना यस्य तं । स्रग्धरावृत्तम् ॥

**प्रथमतरमित्यादि** ॥ अप्रतिविधाय परिहारं अकृत्वा । निवेदयितुं बोध-

**वास**—(सस्मितं) भअवदि जह तक्केमि परितोसिदह्मि अय्यवुत्ते-णेत्ति ।

**सांकृ**—वत्सराजपक्षपातिनी खल्वहम् । न किञ्चिद्ब्रवीमि ।

**राजा**—शीघ्रं प्रवेशय तौ ।

**प्रती**—तह (इति निष्क्रान्तः ।)

(ततः प्रविशति विजयसेनः कञ्चुकी च ।)

**विज**—भोः कञ्चुकिन् अद्य स्वामिपादा द्रष्टव्या इति यत् सत्य-मनुपमं कमपि सुखातिशयमनुभवामि ।

**कञ्चु**—अवितथमेतत् । पश्य—

सुखनिर्भरोऽन्यथापि स्वामिनमवलोक्य भवति भृत्यजनः ।
किं पुनररिबलविघटननिर्व्यूढप्रभुनियोगभरः ॥

**उभौ**—(उपसृत्य) जयतु स्वामी ।

**राजा**—(उभावपि परिष्वजेते ।)

---

१. भगवति यथा तर्कयामि परितोषितास्मि आर्यपुत्रेणेति ।
२. तथा ।

---

यितुं, कामः अभिलाषः, यस्य सः तादृशस्सन् । तर्कयामि ऊहे । स्वामिपादाः प्रभवः । अवितथं सत्यम् ॥

**सुखेति** ॥ भृत्यजनः कर्मकरः जात्येकवचनम् । अन्यथा स्वामिमुखोल्लास-जनकव्यापाराकरणदशायामपि, स्वामिनं प्रभुं, अवलोक्य दृष्ट्वा, सुखेन सौख्येन निर्भरः परिपूर्णः, भवति । अरिबलविघटनेन शत्रुसेनाविजयेन निर्व्यूढः सम्यगनु-ष्ठितः प्रभुनियोगभरः स्वाम्याज्ञाभारः येन सः, तादृशः भृत्यजनस्तु किं पुनः सुखनिर्भरो भवतीति किं वक्तव्यम् । सुखनिर्भर एव भवतीति भावः । पथ्यार्या वृत्तम् ॥

**कञ्चु**—देवि दिष्ट्या वर्धसे ।

हत्वा कलिङ्गहतकं सोऽस्मत्स्वामी निवेशितो राज्ये ।
देवस्य समादेशो निर्व्यूढो विजयसेनेन ॥

**वास**—[1]भअवेदि, अहिजाणासि एदं कञ्चुइं ।

**सांकृ**—कथं नाभिजानामि । ननु स एषः । यस्य हस्ते मातृष्वसा ते पुत्रिकायुगं प्रेषितवती ।

**राजा**—साधु विजयसेन, महान्व्यापारोऽनुष्ठितः ।

**विज**—(पादयोः पतति ।)

**राजा**—देवि दिष्ट्या वर्धसे । प्रतिष्ठितो राज्ये दृढवर्मा ।

**वास**—(सहर्षं) [2]अणुगहिदह्मि । जेदु अय्यवुत्तो ।

**विदू**—[3]ईरिसे अब्भुदये अस्सिं राअउले एदं करणिज्जं । (राजानं निर्दिश्य वीणावादनं नाटयन् ।) गुरुपूआ (आत्मनो यज्ञोपवीतं दर्शयन्) बम्मणस्स सक्कारो, (आराण्यकां सूचयित्वा) सव्वबन्धणमोक्खो त्ति ।

---

१. भगवति अभिजानास्येनं कञ्चुकिनम् ।

२. अनुगृहीतास्मि । जयत्वार्यपुत्रः ।

३. ईदृशे अभ्युदये अस्मिन् राजकुले एतत् करणीयं । गुरुपूजा, ब्राह्मणस्य सत्कारः, सर्वबन्धनमोक्ष इति ।

---

**हत्वेति** ॥ कलिङ्गहतकं दुष्टं कलिङ्गराजं, हत्वा संहृत्य, सः अस्मत्स्वामी दृढवर्मा निजे स्वकीये, राज्ये, निवेशितः प्रतिष्ठापितः । अत एव विजयसेनेन तन्नाम्ना अनेन भवत्प्रणिधिवर्येण, देवस्य प्रभोः, समादेशः आज्ञा, निर्व्यूढः सम्यगनुष्ठितः । पथ्यायां वृत्तम् ॥

**भगवतीत्यादि** ॥ अभिजानासि वेत्सि । दिष्ट्या भाग्यातिशयेन । प्रतिष्ठितः प्रतिष्ठां प्रापितः । अभ्युदये उत्सवरूपे अस्मिन् समये, सत्कारः पूजा ।

**राजा**—(वासवदत्तामपवार्य चोटिकां ददत्।) साधु वयस्य साधु।

**विदू**—[1]भोदि कहं तुमं एत्थ समादिससि।

**वास**—(साङ्कृत्यायनीमवलोक्य सस्मितं) [2]मोइदा हदासेण आरण्णिआ।

**सांकृ**—किं वा तया तपस्विन्या बद्धया।

**वास**—[3]जह भअवदीए रोअदि।

**सांकृ**—यद्येवमहमेव तावन्मोचयामि। (इति निष्क्रान्ता)

**कञ्चु**—इदमपरं सन्दिष्टं महाराजेन दृढवर्मणा। त्वत्प्रसादात् सर्वमेव यथाभिलषितं संपन्नं। तदेते प्राणास्त्वदीयाः। यथेष्टमिमान् विनियोक्तुं त्वमेव प्रमाणमिति।

**राजा**—(सलज्जमधोमुखस्तिष्ठति।)

**विज**—देव न शक्यते देवं प्रति प्रीतिविशेषो दृढवर्मणः कथयितुम्।

**कञ्चु**—यद्यपि तुभ्यं प्रतिपादितायाः प्रियदर्शिकाया अस्मद्दुहितुः परिभ्रंशान्न मे सम्बन्धो जात इति दुःखमासीत्। तथापि वासवदत्तायाः परिणेत्रा त्वया तदपनीतमेव।

१. भवति कथं त्वमत्र समादिशसि।
२. मोचिता हताशेन आरण्यिका।
३. यथा भगवत्यै रोचते।

बन्धनमोक्षः निगलबन्धनविघट्टनम्। छोटिकां अङ्गुलिना अङ्गुलिसङ्घर्षजनितं आनन्दाविष्कारकं ध्वनिविशेषम्। ददत् प्रयच्छन्। "नाभ्यस्ताच्छतुः" इत्यनेन न नुम्। मोचिता त्याजिता। हताशेन दुष्टेन। तपस्विन्या शोच्यया। रोचते रुचिविषयीभवति "रुच्यर्थानां प्रीयमाणः" इत्यनेन रुचेर्योगे चतुर्थी। प्रमाणं प्रमाता निर्धारयितेति यावत्। अधोमुखः अवाङ्मुखः। प्रतिपादितायाः दत्तायाः, दुहितुः पुत्र्याः। परिभ्रंशात् प्रच्युतेः। परिणेत्रा परिणयं कुर्वता। अवस्कन्दः

**वास** —(सास्रं) अय्य कंचुइ कहं मे भइणी परिब्भट्टा।[1]

**कञ्चु**—राजपुत्रि, तस्मिन् कलिङ्गहतकावस्कन्दे, विद्रुतेष्वितस्ततोऽन्तःपुरजनेषु दिष्ट्या दृष्टामिदानीं न युक्तमत्र स्थातुमिति तामहं गृहीत्वा, वत्सराजान्तिकं प्रस्थितः । ततः सञ्चिन्त्य तां विन्ध्यकेतोर्हस्ते निक्षिप्य, निर्गतोऽस्मि । यावत् प्रतीपमागच्छामि तावत्कैरपि तत्स्थानं सह विन्ध्यकेतुना स्मर्तव्यतां नीतम् ।

**राजा** —(सस्मितं) विजयसेन किं कथयसि ।

**कञ्चु**—तत्र चान्विष्यता मया न प्राप्ता ।

(ततः प्रभृति नाद्यापि ज्ञायते क वर्तत इति ।)

(ततः प्रविशति मनोरमा ।)

**मनो** —भट्टिणि[2] पाणसंसए वट्टदि एसा तवस्सिणी ।

**वास**—( सास्रं ) किं[3] उण तुमं पिअदंसणावुत्तंतं जाणासि ।

**मनो**—णं[4] क्खु अहं पिअदंसणावुत्तंतं जाणामि । एसा क्खु आरण्णिआ कलव्ववदेसेण आणीदं विसं पाइअ पाणसंसए वट्टदित्ति एदं मए णिवेदिदं । ता परित्ताअदु भट्टिणी । ( इति रुदती पादयोः पतति । )

---

१. आर्य कञ्चुकिन् कथं मे भगिनी परिभ्रष्टा ।

२. भट्टिनि प्राणसंशये वर्तते एषा तपस्विनी ।

३. किं पुनस्त्वं प्रियदर्शिकावृत्तांतं जानासि ।

४. न खल्वहं प्रियदर्शिकावृत्तान्तं जानामि । एषा खल्वारण्यिका कल्यव्यपदेशेन आनीतं विषं पीत्वा प्राणसंशये वर्तते इति एतन्मया निवेदितं तत् परित्रायतां भट्टिनी ।

---

प्रतिरोधः, विद्रुतेषु पलायितेषु, वत्सराजस्य उदयनस्य । कैरपि अज्ञातनामधेयवासदेशैः कैश्चित् । स्मर्तव्यतां स्मर्तुं योग्यं स्मर्तव्यं तस्य भावः स्मर्तव्यता ताम्। शून्यत्वमिति यावत् । अन्विष्यता गवेषयता । न प्राप्ता न लब्धा । ततः प्रभृति

**वास**—(स्वगतं) हद्धि हद्धि,[1] पिअदंसणादुःखमन्तरिदं आरण्णिआवुत्तंतेण । अदिदुज्जणो लोओ । कदावि मं अण्णहा संभावइस्सदि । ता एदं एत्थ जुत्तं । (प्रकाशं ससंभ्रमं) मणोरमे लहुअ इह एव्व आणेहि तं । णाअलोआदो गहीदविसविज्जो अज्जउत्तो एत्थ कुसलो ।

(निष्क्रान्ता मनोरमा)

(ततः प्रविशति मनोरमया धृता सविषवेगमात्मानं नाटयन्त्यारण्यिका ।)

**आर**—हला[2] मणोरमे कीस दाणिं म अन्धआरं पवेसेसि

**मनो**—(सविषादं)[3] दिट्ठिदेसे अक्कन्दं विसेण । (वासवदत्तां दृष्ट्वा) भट्टिणि लहु परित्ताहि परित्ताहि । गुरुईभूदं से विसं ।

**वास**—(ससंभ्रमं राजानं हस्ते गृहीत्वा) अय्यवुत्त,[4] उट्ठेहि लहु । विवज्जइ एसा तवस्सिणी ।

(सर्वे पश्यन्ति)

**कञ्चु**—(विलोक्य ।) सुसदृशी खल्वियं राजपुत्र्याः प्रियदर्शनायाः । (वासवदत्तां निर्दिश्य) राजपुत्रि कुत इयं कन्यका ।

---

१. हा धिक् हा धिक्, प्रियदर्शनादुःखमन्तरित आरण्यिकावृत्तान्तेन । अतिदुर्जनः लोकः। कदापि मामन्यथा संभावयिष्यति । तदेतदत्र युक्तं । मनोरमे लघु इहैवानय तां । नागलोकात् गृहीतविषविद्यः आर्यपुत्रोऽत्र कुशलः ।

२. हला मनोरमे कस्मादिदानीं मामन्धकारं प्रवेशयसि।

३. दृष्टिदेशे आक्रान्तं विषेण । भट्टिनि लघु परित्रायस्व परित्रायस्व । गुरूभूतमस्या विषं ।

४. आर्यपुत्र, उत्तिष्ठ लघु । विपद्यते एषा तपस्विनी ।

---

तत आरभ्य । क्व कुत्र । प्राणसंशये जीवितसन्देहे । कल्यं प्रातराशः । हा धिक् । इति कष्टे । लघु शीघ्रम् । परित्रायस्व गोपाय । विपद्यते नश्यति ॥

**वास**—[1]अज्ज विंझकेदुणो दुहिदा । वावादिअ विजअसेणेण आणीदा ।

**कञ्चु**—कुतस्तस्य दुहिता। सैवेयं राजपुत्रि । हा हतोऽस्मि मन्दभाग्यः । ( निपत्य भूमावुत्थाय ) राजपुत्रि इयं सा प्रियदर्शना भगिनी ते विपत्स्यते ।

**वास**—[2]अय्यवुत्त परित्ताहि परित्ताहि । मह भइणी विवज्जइ ।

**राजा**—समाश्वासिहि समाश्वासिहि । पश्यामस्तावत् । कष्टं भोः कष्टम् ।

**सञ्जातसान्द्रमकरन्दरसां क्रमेण**
**पातुं गतश्च कलिकां कमलस्य भृङ्गः ।**
**दग्धा निपत्य सहसैव हिमेन चासौ**
**वामे विधौ न हि फलन्ति हि वाञ्छितानि ॥**

मनोरमे पृच्छयतां तावत् किं ते बोध इति ।

**मनो**—[3]सहि, किं ते बोहो । ( साम्रं पुनश्चालयन्ती ) सहि णं भणामि किं दे बोहो त्ति ।

---

१. आर्य, विन्ध्यकेतोर्दुहिता । व्यापाद्य विजयसेनेन आनीता ।
२. आर्यपुत्र, परित्रायस्व परित्रायस्व । मम भगिनी विपद्यते।
३. सखि, किं ते बोधः । सखि ननु भणामि किं ते बोध इति ।

---

**सञ्जातेति** ॥ भृङ्गः अलिः, सञ्जातः समुत्पन्नः, सान्द्रः निबिडः, मकरन्दरसः पुष्परसः यस्यां सा तां, कमलस्य पद्मस्य कलिकां कुट्मलं, पातुं आस्वादयितुं, क्रमेण पुष्पसञ्चारक्रमेण, गतः प्राप्तः । सैषा कलिका, सहसैव झटित्येव, निपत्य, हिमेन अवश्यायेन, दग्धा नाशिता । तत्र अर्थान्तरं न्यस्यति—वाम इति । विधौ दैवे, वामे वक्रे सति । अभिवाञ्छितानि अभीष्टानि, न फलन्ति न सिद्ध्यन्ति हि। अर्थान्तरन्यासालङ्कारः । वसन्ततिलकं वृत्तम् ॥

**पृच्छयतामित्यादि** ॥ बोधः विवेचनशक्तिः । अविस्पष्टं अप्रकाशम् ॥

**प्रिय**—(अविस्पष्टं) [1]जं एदं अवत्थं गदाए वि मए ण महाराओ दिट्ठो (इत्यर्धोक्ते भूमौ पतति ।)

**राजा**—(सास्रम् ।)

**एषा मीलयतीदमीक्षणयुगं, जाता ममान्धा दिशः,**
**कण्ठोऽस्याः प्रतिरुध्यते, मम गिरो निर्यान्ति कृच्छ्रादिमाः।**
**एतस्याः श्वसितं हतं, मम तनुर्निश्चेष्टतामागता,**
**मन्येऽस्या विषवेग एव हि परं, सर्वं तु दुःखं मयि ॥**

**वास**—(सास्रं) [2]पिअदंसणे उट्ठेहि । एसो महाराओ चिट्ठइ । किं दाणिं मए अवरज्झं अआणंतीए । जेण कुविदा मं णालवसि । ता पसीद पसीद । ण क्खु पुणोवि अवरज्झिस्सं । (ऊर्ध्वमवलोक्य) हा देव्वहदअ किं दाणिं मए अवकिदं । जेण एदं अवत्थं गदा मे भइणी पिअदंसणा । (प्रियदर्शिकाया उपरि पतति ।)

---

१. यदेतदवस्थां गतयापि मया महाराजो न दृष्टः ।

२. प्रियदर्शने उत्तिष्ठ । एष महाराजस्तिष्ठति । किमिदानीं मयापराद्धं अजानत्या । येन कुपिता मां नालपसि । तत् प्रसीद प्रसीद । न खलु पुनरपि अपरात्स्यामि । हा दैवहतक किमिदानीं मयापकृतं । येनैतामवस्थां गता मे भगिनी प्रियदर्शना ।

---

**एषेति** ॥ एषा पुरो दृश्यमाना प्रियदर्शिका, इदं ईक्षणयुगं नेत्रद्वन्द्वं, मीलयति सङ्कोचयति ! मम दिशः, अन्धाः अव्यक्ता इत्यर्थः । जाताः निष्पन्नाः । अस्याः कण्ठः कण्ठध्वनिः, प्रतिरुध्यते विष्टभ्यते । मम, इमाः गिरः वचनानि कृच्छ्रात् श्रमेण, निर्यान्ति निर्गच्छन्ति । एतस्याः, श्वसितं निश्वासमारुतः, हतं नष्टम् । मम तनुः शरीरं, निश्चेष्टतां निर्व्यापारतां, आगता प्राप्ता । अतः, मन्ये अहं चिन्तये, अस्याः प्रियायाः, परं विषवेग एव केवलं गरलोद्रेक एव । सर्वं समग्रं, दुःखं कष्टं तु, नः अस्माकमेव । असङ्गत्यलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥

**प्रियदर्शने इत्यादि** ॥ उत्तिष्ठ उत्थानं कुरु । अपराद्धं अपराधः कृतः। नालपसि आलापं न करोषि । प्रसीद प्रसन्ना भव । मूढः किंकर्तव्यताविवेक-

**विदू**—[1]भो वअस्स कहं तुमं मूढो एव्व चिट्ठसि । ण एसो विसादस्स कालो । विसमा क्खु गई विसस्स । ता दंसेहि अप्पणो विज्जापहावं ।

**राजा**—सत्यमेवैतत् ( प्रियदर्शिकामवलोक्य ) मूढ एवाहमेतावतीं बेलां । तदहमेनां जीवयामि । सलिलं सलिलम् ।

**विदू**—( निष्क्रम्य, पुनः प्रविश्य च ) [2]एदं सलिलं ।

**राजा**—( उपस्पृश्य, प्रियदर्शिकाया उपरि हस्तं निधाय, मन्त्रस्मरणं नाटयति ।)

**प्रिय**—( शनैरुत्तिष्ठति )

**वास**—[3]दिट्ठिआ पच्चुज्जीविआ मे भइणी ।

**विज**—अहो देवस्य विद्याप्रभावः ।

**कञ्चु**—सर्वत्राप्रतिहता नरेन्द्रता देवस्य ।

**प्रिय**—( शनैरुत्थायोपविश्य च जृम्भिकां नाटयन्ती अविस्पष्टं ) [4]मणोरमे चिरं क्खु पसुत्तह्मि ।

**विदू**—[5]भो वअस्स णिरूढं दे मंतवादित्तणं ।

---

१. भो वयस्य कथं त्वं मूढ एव तिष्ठसि । नैष विषादस्य कालः । विषमा खलु गतिर्विषस्य । तद्दर्शयात्मनो विद्याप्रभावं ।

२. एतत् सलिलं ।

३. दिष्ट्या प्रत्युज्जीविता मे भगिनी ।

४. मनोरमे चिरं खलु प्रसुप्तास्मि ।

५. भो वयस्य निरूढं ते मन्त्रवादित्वं ।

---

विकलः । विषादस्य दुःखस्य । प्रभावं महिमानम् । वेलां समयम् । अत्यन्तसंयोगे द्वितीया । नरेन्द्रता विषवैद्यत्वं ईश्वरत्वं च । निरूप्य निद्धयाय ॥

**प्रिय**—(साभिलाषं राजानं निरूप्य संलज्ज किञ्चिदधोमुखी तिष्ठति ।)

**वास**—[1]अय्यवुत्त किं दाणिं वि विसं अवत्थं करेदि ।

**राजा**—(सस्मितं)

**स्वभावस्था दृष्टिर्न भवति, गिरो नातिविशदाः,**
**तनुस्सीदत्येषा प्रकटपुलकस्वेदकणिका ।**
**यथा चायं कम्पः स्तनभरपरिक्लेशजनन-**
**स्तथा नाद्याप्यस्या नियतमखिलं शाम्यति विषम् ॥**

**कञ्चु**—(प्रियदर्शिकां निर्दिश्य ।) राजपुत्रि एष ते पितुराज्ञाकरः प्रणमति ।

(इति पादयोः प्रणमति ।)

**प्रिय**—(विलोक्य) [2]कहं कञ्चुई अय्यविणअवसू (सास्रम्) हा ताद हा अज्जुए ।

---

१. आर्यपुत्र किमिदानीमपि विषमवस्थां करोति ।

२. कथं कञ्चुकी आर्यविनयवसुः । हा तात हा अज्जुके ।

---

अद्याप्यस्याः विषवेगो न शाम्यतीत्याह—**स्वभावेति** ॥ यथा यस्मात् अस्याः, दृष्टिः लोचनं, अद्यापि, स्वभावस्था निसर्गस्थिता, न भवति । यथा, गिरः वाचश्च, अद्यापि, अतिविशदाः अत्यन्तं स्पष्टाक्षराः न भवन्ति । यथा, प्रकटाः स्पष्टाः, पुलकाः रोमाञ्चाः, स्वेदकणिकाः घर्मोदबिन्दवश्च, यस्यां सा तादृशी, एषा तनुश्च, सीदति ग्लायति । यथा यस्मात् कारणात्, स्तनभरयोः पयोधरभारयोः परिक्लेशस्य जननः उत्पादकः, अयं, कम्पश्च वेपथुश्च, विद्यते । तथा, तस्मात्कारणात्, अद्यापि, अस्याः, अखिलं विषं समग्रं गरलं, नियतं निश्चितं, न शाम्यति । अनुमानालङ्कारः । शिखरिणी वृत्तम् ॥

**राजपुत्रीत्यादि** ॥ समाश्वसिता मनस्स्थैर्यमापादिता ॥

**कञ्चु**—अलं रुदितेन। कुशलिनौ ते पितरौ वत्सराजप्रभावात्। पुनस्तदवस्थमेव राज्यं।

**वास**—(सास्रं) एहि[1] अळीअसीले। दाणिं वि दाव भइणिआसिणेहं दंसेहि। (कण्ठे गृहीत्वा) दाणिं समस्सत्थह्मि।

**विदू**—होदि[2] तुमं भइणिं गेण्हिअ कण्ठे एव्वं परितुट्ठासि। वेज्जस्स पारितोसिअं विसुमरिदं

**वास**—वसन्तअ[3] ण विसुमरिदं। (राजानं निर्दिश्य सस्मितं) वेज्ज पसारेहि हत्थं। भइणीए अग्गहत्थं दे परितोसिअं दाविस्सं।

**राजा**—(हस्तं प्रसारयति।)

**वास**—(प्रियदर्शिकाहस्तमर्पयति।)

**राजा**—(हस्तं परिहृत्य) किमनया। संप्रत्येव कथमपि प्रसादितासि।

**वास**—को[4] तुमं अगण्हिदुं। पुडमं एव्व तादेण इअं दिण्णा।

**विदू**—भो[5] माणणीआ क्खु देवी। मा से पडिऊलं करेहि।

**वास**—(राज्ञो हस्तं बलादाकृष्य प्रियदर्शिकामर्पयति।)

---

१. एहि अलीकशीले। इदानीमपि तावत् भगिनीस्नेहं दर्शय। इदानीं समाश्वसितास्मि।

२. भवति त्वं भगिनीं गृहीत्वा कण्ठे एवं परितुष्टासि। वैद्यस्य पारितोषिकं विस्मृतं।

३. वसन्तक न विस्मृतं। वैद्य प्रसारय हस्तं। भगिन्याः अग्रहस्तं ते पारितोषिकं दापयिष्यामि

४. कस्त्वमग्रहीतुं। प्रथममेव तातेनेयं दत्ता।

५. भो माननीया खलु देवी। मास्याः प्रतिकूलं कुरु।

**राजा**—देवी प्रभवति । कुतोऽन्यथाकर्तुं विभवः ।

**वास**—¹अय्यउत्त अदो वि परं किं पिअं करीअदु ।

**राजा**—किमतः परं प्रियं । पश्य—

निश्शेषं दृढवर्मणा पुनरपि स्वं राज्यमध्यासितं
त्वं कोपेन सुदूरमप्यपहृता सद्यः प्रसन्ना मम ।
जीवन्ती प्रियदर्शिका च भगिनी भूयस्त्वया सङ्गता
किन्नु स्यादपरं प्रियं प्रियतमे यत्सांप्रतं प्राथ्यते ॥

तथापीदमस्तु (भरतवाक्यम् ।)

उर्वीमुद्दामसस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टा-
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः ।

---

१. आर्यपुत्र, अतोऽपि परं किं प्रियं क्रियतां ।

---

**निश्शेषमिति** ॥ दृढवर्मणा राज्ञा, निश्शेषं समग्रं, स्वं स्वकीयं राष्ट्रं पुनरपि भूयोऽपि, अध्यासितं आक्रान्तम् । कोपेन रोषेण, सुदूरं अतिभूमिं, अपहृता आनीता, त्वमपि, सद्यः सपदि, मम, मद्विषये, प्रसन्ना प्रसादयुक्ता, अभवः। जीवन्ती प्राणान् धरन्ती, भगिनी सहोदरी, प्रियदर्शिका च, त्वया भवत्या सह, भूयः पुनरपि, सङ्गता समागमं प्राप्ता । एवं सति, हे प्रियतमे प्रेयसि, यत्, साम्प्रतं अधुना, प्राथ्यते वाञ्छयते, तत् तादृशं, अपरं अन्यत्, प्रियं दयितं वस्तु, किं स्यात् न किमपि स्यादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

**उर्वीमिति** ॥ वासवः इन्द्रः, इष्टां, वृष्टिं वर्षं, विसृजन् मुञ्चन्, उर्वी भूमिं, उद्दामानि अमितानि सस्यानि यस्यां सा तां, जनयतु विदधातु । विप्रमुख्याः ब्राह्मणोत्तमाः, विधिवत् शास्त्रोक्तप्रकारेण, इष्टैः यागैः, त्रैविष्टपानां देवानां, प्रीणनं तृप्तिं, विदधतु विरचयन्तु । उचिता अर्हा, सज्जनानां साधूनां, सङ्गतिः

आकल्पान्तं च भूयात् स्थिरतरमुचिता सङ्गतिस्सज्जनानां
निश्शेषं यान्तु शान्तिं पिशुनजनगिरो दुर्जया वज्रलेपाः ॥

(इति निष्क्रान्तास्सर्वे ।)

॥ इति श्रीमहाकविश्रीहर्षविरचितायां प्रियदर्शिकानाटिकायां चतुर्थोऽङ्कः ॥

---

साङ्गत्यञ्च, आकल्पान्तं कल्पावसानपर्यन्तं, स्थिरतरं अत्यन्तं दृढं भूयात् स्यात् । दुर्जया जेतुमशक्याः, वज्रलेपाः वज्रलेपवदभेद्याः, पिशुनजनगिरः सूचकवचनानि, शान्तिं शमनं, निश्शेषं निरवशेषं यथा तथा, यान्तु प्राप्नुवन्तु । आशीर्नामालङ्कारः । स्रग्धरा वृत्तम् ॥

---

"चेन्नपुर्यां ओरियण्टल्" मुद्राक्षरशालायां मुद्रितम् ।

# DRAMATIS PERSONÆ.

## MALE.

वत्सराजः—King of Kousambi, the hero.

सूत्रधारः—Stage Manager.

वसन्तकं or विदूषकः—the Buffoon.

दृढवर्मा—King of the Angas and father of Priyadarsika.

विन्ध्यकेतु—King of foresters and friend of Dridhavarman.

कलिङ्गः—King of Kalinga and enemy of Dridhavarman.

विजयसेनः—Commander-in-chief to Vatsa.

रुमण्वान्—Minister to King Vatsa.

कञ्चुकिन्—the Chamberlain.

## FEMALE.

वासवदत्ता—the crowned Queen of Vatsa.

आरण्यिका—the Heroine, daughter to Dridhavarman otherwise called प्रियदर्शिका or प्रियदर्शना.

इन्दीवरिका
मनोरमा } Servants to Queen Vasavadatta.

काञ्चनमाला—Friend of Aranyika.

सांकृत्यायनी—a female ascetic.

यशोधरा—the Gate keeper प्रतीहारी.

NOTES ON

# PRIYADARSIKA.

THE play called Priyadarsika is a नाटिका of four acts which is a short or light comedy and one of the eighteen Uparupakas. Ratnavali and Viddhasalabhanjika belong to this class. The definition of a नाटिका is given in the commentary, some ascribe the work to king Sri Harsha on the authority of a stanza which this work contains श्री हर्षो निपुणः कविः etc., while others contend that the real author was Dhavaka a poet who composed the work for king Sri Harsha his patron. That धावक the author was very popular and famous and one of the best poets of his age is acknowledged beyond doubt by great men such as the author of Kavya Prakasa who speaks of his fame thus श्रीहर्षादेर्धावकादीनामिव यशः and Kalidasa who speaks of him in his play Malavikagnimitra as प्रथितयशसां धावकसौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य etc. The date of the author is left in obscurity as those of most, if not all, of our Sanskrit writers. But some through great difficulty fix the date to the 6th century after a great deal of plausibility. The other works said to have been written by the same author are Ratnavali and Nagananda the former of which is a work of considerable merit. The play deals with the story of king Vatsa also called Udhyana, a celebrated prince of the lunar race who reigned at Kausambi. Vasavadatta, princess of Ujjaini saw him in a dream and fell in love with him. The sources of this play are to be found in Kathasaritsagara a sanskrit work by Somadevabhatta which itself is a translation of the Bribat Katha of Gunadhya written in the Paisachi language.

Sl. 1. धूमव्याकुलदृष्टि: having eyes becoming turbid with the smoke produced from the fire kindled at the time of marriage. इन्दुकिरणै: by the rays of the moon on the head of Siva. वर the bridegroom i.e., Siva उत्सुका who was anxiously desirous of beholding him. भूयोह्रिया with boundless bashfulness. ब्रह्मण: from Brahman who was standing near in the capacity of priest ईर्ष्या with jealousy in consequence of his having the Ganges on his head पादनखेन्दुदर्पणगते-हरे Loc. Absolute. When Siva was reflected in the moonlike nails of her feet दधाना pres. part. of धा. स्पर्शात् through contact with the body of Siva. करग्रहविधौ in the act of marriage or पाणिग्रह ceremony. शिवाय for prosperity or wellfare. The metre of the stanza is शार्दूल-विक्रीडितं The sentiment of the play is शृङ्गार and the hero is a धीरललित: and the story as has been said is wellknown.

Sl. 2. कैलासाद्रावुदस्ते परिचलति when mount Kailasa was oscillating when lifted by Ravana. Ravana the king of Rakshasas once, elated with his strength, lifted Mount Kailasa while Siva and Parvati were at the top. God Siva knowing this, pressed the mountain with his foot and as a result Ravana's hand was caught and crushed underneath the mount. To escape from this difficulty he was praying to God Siva for a thousand years when he was freed. गणेषु a troop of demigods considered as Siva attendants and under the special superintendence of Ganesa उल्लसत्कौतुकेषु when they were curious to know who could have lifted the mountain. क्रोडं the lap कुमार God Subrahmanya, or Kartikeya. विषभृत्ति the collection of serpents which are the special ornaments of Siva. The singular is used in a collective sense as the name of the species. पादावष्टम्भ by the pressure of the feet of Siva on the mountain दशमुख Ravana याति pres. part. of loc.

sing. of या क्रुद्धोऽपि तुष्टः even though he was very much enraged was pacified by Parvati. भयघनं so as to be very close (in embrace) through fear.

नान्द्यन्ते at the close of the नान्दी or benedictory stanza or stanzas. नान्दी has been defined thus :—आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते । देवद्विज नृपादीनां तस्मान्नान्दीति संज्ञिता ॥ नन्दन्ति देवा यस्यामिति नान्दी. This नान्दी should be composed of eight or twelve, or eighteen or twenty two metrical lines. The word पद in the definition has been variously interpreted to suit the respective situations. The various interpretations put upon the word पद are (1) a metrical quarter (2) a word (3) a number of words giving a complete idea or a sentence. For our purpose we shall take it to mean a metrical quarter and say that it is composed of eight lines which condition for नान्दी is satisfied. Another most important condition is मनाक्काव्यार्थसूचनम् i.e., that it should give glimpses of the plot by the mere sounds. Whether the author really meant it so or not is doubtful; but commentators force out the meaning from the sounds of these words. By धूमव्याकुलदृष्टिः is to be understood the uncertain state of Priyadarsika who was greatly grieved for the calamity of Dridhavarman her father caused by the wretched Kalinga. By इन्दुकिरणैराह्लादिताक्षी is foreshadowed the joy of the heroine for her meeting with her father's friend Vindhyaketu and his followers. पश्यन्ती वरमुत्सुका shows her interview with the hero नतमुखी etc., shows that she was found out by the queen. ईर्ष्या etc., indicates the jealousy of Vasavadatta towards Priyadarsika to whom the king was favourably disposed स्पर्शादुत्पुलका horripulation when she was touched by the king in the drama that was played and the consequent moving of the king with Priyadarsika. This in brief is the काव्यार्थसूचना which is considered one of the characteristics of नान्दी.

सूत्रधार: literally 'the thread-holder' a stage-manager, the principal actor who arranges the cast of characters and instructs them, and takes a prominent part in the Prastavana or prelude: he is defined in the commentary. परिक्रम्य words like this printed in small types and placed within brackets are only stage directions. वसन्तोत्सव. A certain festival performed during the वसन्त season. सबहुमानं with respect and kindness. आहूय is here ind. past. part. passive of ह्व with आ. श्रीहर्षदेव was the name of the king who was the patron as some say of the author of the work. राजसमूहेन by the assembly of kings: one word for राजसमूह is राजक. अपूर्ववस्तुरचनालंकृता adorned the proper setting of the plot which was unheard of before. प्रियदर्शिका—प्रियदर्शिकामधिकृत्य कृतानाटिका—नाम named, famous श्रोत्रपरंपरा from ear to-ear, hearsay. प्रयोगत: when it is acted or played, in reality. नाटयितव्या potential past. part. of the causal of नट् to dance. नेपथ्यरचना arrangements of the tiring room where the actors attire themselves. The word नेपथ्य may mean 'decoration' as well as the tiring room itself. यावत्संपादयामि संपादयिष्यामि. When यावत् and पुरा are added to verbs in the present tense they acquire the sense of the future. आवर्जितानि have been won over or attracted.

Sl. 3. श्रीहर्षो निपुण: कवि:. It is here stated that श्रीहर्ष is the author of the work. परिषत् परित: सीदन्ति अस्यामिति एषा this one which is in front of him. गुणग्राहिणी are capable of taking only the merits. हारि मनोहारि attractive वत्सराज the king of Kausambi the hero of the play. दक्ष skilful or clever वस्तु एकैकं each of these necessary requisites, namely what is given in the two previous lines. भाग्योपचयात् through the accumulation of my good luck अयं गुणानां गण: these essential factors.

This same stanza occurs in each of the other works Ratnavali and Nagananda with slight modifications. This stanza as well as the preceding speech should be given by the same Sutradhara who repeated the Nandi verses as some say or by another according to others.

अये an exclamation of wonder or surprise अङ्ग a certain country on the banks of the Sarayu. It was so called because Manmatha, having been reduced to ashes by the fire of the blind eye of Siva, abandoned his body. दृढवर्मन् name of the Anga king the father of Priyadarsika. आन्तः पुरिकः अन्तः पुरे नियुक्तः कञ्चुकि an attendant on the women's apartments, a chamberlain. He must be a brahmin, very old etc., भूमिका dress or apparel=वेषः. यावत् संपादयामि note the change of tense. The character should not enter the stage unless his approach is previously indicated according to the sutra नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वा । प्रस्तावना प्रस्तूयते प्रबन्धार्थः अनयेति Prelude; every Sanskrit play is introduced by the Prastavana or आमुख as it is called. It is thus defined:—नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैस्वकार्योत्थैप्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥

---

## ACT I.

---

Sl. 4. राज्ञा to king Dhridhavarman. बन्धुवियोगदुःखं to himself. कटु bitter एतत् this kind of calamity or distress. चिरजीविता longevity.

सशोकविस्मय शोक as a consequence of these calamity and विस्मय as a result of these befalling the king of such immense strength and prowess. शक्तित्रय the regal power which has three parts or elements :—(1) प्रभुशक्ति or प्रभावशक्ति 'the

majesty or pre-eminent position of the king himself' (2) मन्त्रशक्ति 'the power of good counsel' and (3) उत्साहशक्ति 'the power of energy.' रघु a celebrated king of the solar race. दिलीप a king of the same race son of Amsumat and father of Bhagiratha but according to Kalidasa of Raghu. "He is described by Kalidasa as a grand ideal of what a king should be. His wife was Sudakshina a woman in every respect worthy of her husband; but they had no issue. For this he went to his family priest Vasistha who told him and his wife to serve the celestial cow Nandini. They accordingly served her for 20 days and were on the 22nd day favoured by the cow. A glorious son was then born who conquered the whole world and became the founder of the line of the Raghu's नहुष 'Name of a king of the lunar race, son of Ayus and grand-son of Pururavas and father of Yayati. He was a very wise and powerful king and when Indra lay concealed under waters to expiate the sin of having killed the demon Vrithra, a Brahmana, he was asked to occupy his seat. While there he thought of winning the love of Indrani and caused the seven sages to convey him in a palanquin to her house. On his way he asked each of them to be quick using the words 'Sarpa' 'sarpa' (move on, move on), when one of the sages Agastya cursed him to be a 'sarpa' (serpent). He fell down from the sky, and remained in that wretched state till he was relieved from it by Yudhisthira. स्वदुहिता his daughter Priyadarsika वत्सराजाय note the change of the न् of राजन् to an अकारान्त word at the end of the compound, अनुशय remorse or repentance. दृढबन्धने वर्तत इति perhaps an allusion to Vatsa's having been kept in prison by Chanda Mahasena the king of Ujjain. He on being released by the minister he carried off Vasavadatta from her father. लब्धरन्ध्रेण who had secretly obtained the news. कलिङ्गहतक कलिङ्गानां राजा कलिङ्गः स चासौ हतकश्च.

the word हतक is added to names in the sense of wretched or vile and hence the wretched king of Kalingas उपपन्न past pass. part. of पद् with उप which is impending अद्धये pres. 1st pass. sing. of धा with श्रत्. स्वामिनं my lord i.e. king Dridhavarman अनृणं करिष्यामि relieve him of his debts. प्रलयकालदारुणात् which was cruel and terrible like the time of the deluge or the dissolution of the universe. अपवाह्य ind. past. part. of the causal of वह् with अप अवस्कन्द: attack or assault. आटविक अटव्यां भव: a forester. It has also another form अटविक Vindhyaketu was the forest king and friend of Dridhavarman. It was in his custody that Priyadarsika was placed by the chamberlain. स्थापिता past. pass. part. of the causal of स्था अगस्त्यतीर्थं name of a certain celebrated Tirtha in the south. निर्मानुषीकृते which was constructed by superhuman agency विचितं searched दस्यु a thief मन्दभाग्य: adj. to अहं. बन्धनात् परिभ्रष्ट: etc., in allusion to his being thrown into prison by king Pradyota whose daughter fell in love with him (king Vatsa). प्रद्योततनयां Vasavadatta. कथयिष्यामि 2nd future of कथ् to tell. माभैषी: अभैषी: aorist 2nd sing of भी to fear. When the prohibitive particle मा is placed before an Aorsit form of the verb the initial अ is dropped. तत्रभवान् when the word भवत् is added to तत्र, अत्र etc., then the compound acquires the sense of respectability पादपरिचर्यां humble service. सफलयिष्यामि make it fruitful. Note the formation of the verb तैक्ष्ण्यं तीक्ष्णस्य भाव: severity.

Sl. 5. घनबन्धनमुक्त: means as applied to the sun freed from the chains namely the clouds and as applied to the king freed from the strong fetters. कन्याग्रहणात् (1) from the sixth sign of the zodiac i.e., Virgo (2) by obtaining the virgin namely Vasavadatta. तुला one of the signs of the zodiac Vibra.

(2) eminence अधिगतस्वधामा (1) attaining his full luminosity (2) having obtained his own place or residence i.e., Kausambi धाम (1) splendour (2) house or residence. विष्कम्भ: an interlude between the acts of a drama performed by one or more characters middling or inferior who connect the story of the drama and the subdivisions of the plot by briefly explaining to the audience what has occured in the intervals of the acts or what is likely to happen later on. If the character or characters spoken of be middling then it is called a शुद्धविष्कम्भ: but when there is a mixture of middling and inferior characters then it is called a मिश्रविष्कम्भ:

विदूषक: A jester or buffoon particularly the humorous companion and confidential friend of the hero in a play, who excites mirth by his quaint dress, speeches, gestures, appearances etc. and by allowing himseif to be made the butt for ridiculy by almost everybody.

Sl. 6. उपलक्षितानि—tested or examined, अधिकं is here an adverb. निर्व्यूढा p.p.p. has been kept up. व्यसनिता firm attachment. स्त्रीरत्नं the best of women. cf. जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते धर्मत:—the प्रत्यय तसिल् is added to nouns which become indeclinable in the sense of the ablative case.

दास्या: सुत: The genitive sing दास्या: enters into compounds like दास्या: सुत: दास्या: सुत: (Aluk) when they mean abuse or reproach ; but दासीपुत्र means the son of a whore literally. बन्धनहतकं note the force of हतक which means wretched or vile. खलखलायमान Denom. part. producing sounds.

वसन्तक name of the Vidushaka.

Sl. 7. छादकं prison. तन्मुखेन्दुद्युति: the splendour of the moonlike-tree of Vasavadatta. इष्टा is understood after द्युति:

निगलस्वन the sounds of fetters. प्रद्योतपुत्र्या: of Vasavadatta, the daughter of प्रद्योत king of Ujjain.

निर्यास्यति 2nd future of या with निर् उपास्तां तावदियं कथा enough of this story. We shall leave this story for the present. बहूनि दिवसानि विजयसेनस्य प्रेषितस्य note the sansksit idiom. रुमण्वान् the minister of Vatsaraja. आलपितुं inf. of purpose of लप् with आ.

प्रतीहारी the gate keeper प्रतीहारे नियुक्त: one employed to remain in the threshold. प्रवेशय Imperative 2nd sing causal of विश् with प्र. विन्ध्यकेतोर्विजेता Before verbal derivatives the case that to be used is the genitive.

परिष्वज्य Ind. past part of स्वञ्ज् with परि to embrace. अपि is used in the interrogative sense. विस्तरत: in detail, at length. Note the distinction between विस्तर and विस्तार. देवपाद the royal feet or presence, an honorific term for a king. अनवेक्षितबलवाहन: who had not known how strong our army was खम् the sky. उद्घोषयन्. pres. part. of the causal of घुष् to proclaim with उद्.

शोभितं विन्ध्यकेतुना Vindhyaketu has done well. शोभितं Impersonal past. pass. part. मत्सर envy or jealousy. विमर्द encounter. संप्रहार battle अकरोत् Imperf 3rd sing of कृ to do. संक्षेपत: very briefly opposed to विस्तरत.

Sl. 9. पादात: a foot-soldier पादातं infantry. पिष्ट्वा Ind. past part of पिष् to grind अश्वीयं cavalry. आशा: the quarters. Note its other meaning. उत्खाय Ind. past part of खन् with उद् to draw or pull out. कदलीकानन a grove of plantain trees.

Sl. 10. बलत्रितय the three parts of an army namely the elephants, horses and foot soldiers. एक एव himself being alone, without any assistance. कृपाण the sword. शस्त्रप्रहार वक्षाः adj. to विन्ध्यकेतुः

गुणैकपक्षपातिनां who are attached only to merits सहधर्मचारिण्यः the lawful wives; the word सहधर्मिण्यः is also used in this sense अभिजातरूपा Of noble blood and handsome appearance. तां प्रतिदेवः प्रमाणम् note the peculiar sanskrit idiom. यशोधरा name of the gate-keeper. भगिनीबुद्ध्या with the thought that she is your sister. शिक्षयितव्या potential pass part of शिक्ष्. वरयोग्य fit for marriage i.e., when she attains marriageable age. स्मारय Imper. 2nd sing of the causal of स्मृ.

नेपथ्ये behind the screens. वैतालिकः पठतीति शेषः. वैतालिकः विविधस्तालस्तेन व्यवहरतीति a bard or minstrel. It is the duty of such persons to announce the particular period of the day. स्नानीयोपकरण things fit for bathing. वारविभ्रमवतीलोक the collection of courtezans. व्यवहित past. pass. part of धा with वि and अव. अपरशातकुम्भ golden pot which are different from those of which are kept in the bath room. नभोमध्यमध्यास्ते. When the roots शी, स्था and आस् are preceded by the preposition अधि the case to be used is the Accusative instead of the locative. सहस्रदीधितिः who has a thousand rays i.e, the sun.

Sl. 12. क्वथदिव as if to boil. शफर fish. दीर्घिका a pond. छत्र an umbrella. बर्हभारं its feathered tail. छायाचक्रं the shade in the form of a circle under a tree. उपैति 3rd sing. present of इ with उप. Imperfect ऐत् perf. इयाय aorist अगात् आलवाल the basin at the bottom of a tree. कर्णपाली the tip of the ear.

सत्कृत्य after worshipping him उच्छित्तये for the destruction.

## ACT II.

---

इन्दीवरिका name of the maid servant of Vasavadatta the queen. स्वस्तिवाचन a complimentary or congratulatory present of flowers etc. to any one attended with good wishes and blessings. शब्दायते a denom. verb from शब्द. धारागृह a bath room with water jets or a house furnished with artificial jets or fountains of water. कुक्कुटवाद lit. the crow of a cock i.e. false mantras because he was not conversant with any. He deliberately gives out how he was making himself loved by the royal family. अस्मादृशाः ब्राह्मणाः brahmans of my stamp who have not learnt the Vedas and Sastras. राजकुल the royal household. वयस्यः वयसा तुल्यः अनुष्ठास्यामि 2nd future of स्था with अनु.

मङ्गलमात्र मण्डनभृत wearing only such ornaments as fit the auspicious occasion because she was not able to bear the other ornaments as she was very much emaciated. प्रातस्तन belonging to the morning. The suffix तन is added to words like सायं प्रातः in the sense of belonging to or produced in नियमोपवासविधिना This is the reason of her being emaciated.

वर्धतां भवान् The pronoun भवत् though it has the sense of the 2nd person requires a verb in the 3rd person singular. यद्येवं किं तव note the hit at Vidushaka. He said that the queen was going to worship a brahmin implying thereby that he was the person. But the king said 'what is that to you' meaning that he was only a low born person and that he would not be worshipped. This is simply a joke.

चतुर्वेद पञ्चवेदषड्वेद etc. Vidushaka displays here his knowledge of the number of Vedas. The king very aptly retorts Vidushaka. महाब्राह्मणः a great brahmin used ironically for

ब्राह्मणाश्रम: वकुल and मालती are two kinds of trees having sweet smelling flowers. जालक a collection. स्तबक a kind of tree bearing red flowers. तमाल name of a tree with a very dark bark. पिहित p. p. p of धा with अपि or पि according to the grammarian Bhaguri पिहित वगाह्य etc. are also admissable. सश्रीकता exquisite beauty. Note the addition of क after श्री at the end of a Bahuvrihi compound.

Sl. 2. प्रवाल tender sprouts. Else where it may mean 'coral' भाति 3rd sing of भा to shine 2nd conj. शेफालिका a kind of plant. सप्तच्छद a kind of plant. सप्तच्छद् also called सप्तपर्ण गायन्ति 3rd sing present of गै to sing. perf. जगौ aorist अगासीत् वारुणी spirituous liquor.

अग्रपत्रं पत्रस्य अग्रे जलदसमय जलं ददातीति जलद: समय convention of poets.

Sl. 3. बिभ्राणा pres. part of भृ 3rd conj. शिरीषकुसुम a flower of a tree called शिरीष regarded as the type of delicacy. शाद्वल शादा: सन्ति अत्रेति a grassy plot, a meadow. कुट्टिम ground paved with small stones बन्धनात् from the stalk. बन्धूकपुष्प a kind of red flower. इन्द्रगोपक इन्द्रो गोपो (रक्षको) अस्य वर्षाभवत्त्वात्तस्य, a kind of red insect produced in the rainy season.

हञ्जे A vocative particle used in addressing a female attendent or maid-servant. Whereas हण्डे is used in addressing a female of inferior rank or by equals of the lowest caste in addressing each other; cf. हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति. आरण्यिका the pseudonym of Priyadarsika. अस्ताभिलाषिणा desiring to set i.e. about to set. नेपथ्याभिमुखमवलोक्य looking at the screen

आत्मगतम्. ind. aside (to oneself) being considered to be spoken privately (opposite प्रकाशं aloud) ; frequently used as a stage direction in dramas : it is the same as स्वगतं which is

thus defined अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् । व्यापादित past. pass part of the causal of पद् with वि and आ. न पुनः महार्घ etc. I have not revealed my noble birth and hence I do not consider it a disgrace to serve persons of equal rank.

अपि is here a sign of interrogation. गुल्म a thicket ननु ब्रवीमि etc. the king's speech to Vidushaka in a former occasion is again repeated. उत्कण्ठानिर्भरं which is fully taken possession of by desires.

Sl. 4. सुखयति denom. past to give pleasure to, to delight नूपुर anklets; the object feet for the sounds which it produces. विधत्ते 3rd sing of धा with वि सौधपाली a row of mansions· परिमलपटुना increasing in fragrance वारिसंस्पर्शशीताः cool on account of contact with the waters of the pond.

Sl. 5. स्फुटपङ्कजकान्तिहारिणी when applied to the pond means 'beautiful on account of the splendour of fully blossomed lotuses'; as applied to the sight of the deity it means 'romantic like the splendour of the blossomed lotuses.'

The tresses of a woman are compared to the collections of bees, the tender hands to the shoots of the coral plants and the slender arms to creepers. उद्यानदेवता the deity presiding over the garden.

Sl. 6. तत् the statement that she was a Nagakanya; दृष्टम् the subject is पाताले understood. तस्मिन् there in the Patala-Loka. मूर्ता incarnate. He again contradicts his previous statement. श्रीः Goddess Lakshmi.

परिचारिका a female servant. नलिनीपत्रं the lotus leaf. अवचिनु Imperative 2nd sing of चि with अव शेफालिकाकुसुमानि for the purpose of worshipping the sage Agastya आलापः conversa-

tion श्रूयते pres pass of श्रु to hear perf. शुश्राव aor. अश्रौषीत् अवहिता: attentively.

हले A vocative particle used (only in theatrical language) in addressing a female friend. त्वया विना विना governs either the accusative, instrumental or dative, असितुं Inf. of purpose of अस् to be Imperf. आसीत्. Perf. बभूव. aor. अभूत् आसितव्य potent participle of आस् to sit महाराजेन राजन् at the end of a Tatpurusha compound drops its final न् and becomes an अकारान्त word Cf. राजाहस्सखिभ्यष्टच्. विन्ध्यकेतुदुहिता Aranyika who was found in the house of Vindhyaketu. स्मारयामि causal of स्मृ वरचिन्ता the thought of a proper match for her.

असंबद्धप्रलापिनी one who speaks irrelevently आभिजात्यं noble birth. धीरतया cleverness or strength of mind as shown by her reply to the servant-maid. भाजनं the receptacle. Words भाजनं पात्रं, प्रमाणं etc. do not change their gender and number whatever be the gender and number of the nouns qualified अवचिन्वन्ती pres part of चि with अव (fem. form). स्वल्पमेव एतत्. This is indeed very little. This compliment is not adequate.

Sl. 7. ददत्या pres part of दा 3rd conj (fem) दृशां to the eyes of beholders. कामपि a certain indescribably (beauty). द्रष्टव्यतां governed by यातायाः करस्पर्शितत्वं the state of being touched by the hand and also by the bit rays (of the moon). एते पद्मा: lotuses; the word may also be used in the masculine in this sense. तदेव the fact that the lotuses do not close when touched by her hands.

भ्रमरबाधा. The dramatic purpose of the incident of the bee is to bring, to the best advantage, the hero and the heroine face to face with each other and this trick is adopted by dramatists for this very purpose. द्विगुणतरं doubly. आयासयन्ति

